# किरातार्ज्जुनीयम्

पूर्व्वार्द्धम्

महाकवि श्रीभारविकृतम् ।

---

श्रीमल्लिनाथसूरिविरचितया घण्टापथसमाख्यया

व्याख्यया सहितम् ।

कलिकातानगरे

श्रीयुतभुवनचन्द्रवसाकसंस्थापितसंवादज्ञानरत्नाकर-

यन्त्रे तद्द्वारैव

१९३५ संवत्सरे

मुद्रित ओ प्रकाशितम् ।

निमतल्ला घाट ष्ट्रीट ८ संख्यक भवन ।

# टीकोपक्रमणिका ।



अर्द्धाङ्गीकृतदाम्पत्यमपि गाढानुरागि यत् ।
पितृभ्याञ्जगतस्तस्मै कस्मैचिन्महसे नमः ॥ १ ॥
आलम्बे जगदालम्बं हेरम्बचरणाम्बुजम् ।
शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्द्धयः ॥ २ ॥
तद्दिव्यमव्ययन्धाम सारस्वतमुपास्महे ।
यत्प्रसादात्प्रलीयन्ते मोहान्धतमसच्छटाः ॥ ३ ॥
वाणीङ्काणभुजीमजीगणदवासासीच्च वैयासकी
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ ४ ॥
मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
तत्किरातार्ज्जुनीयाख्यं काव्यं व्याख्यातुमिच्छति ॥ ५ ॥
नारिकेलफलसम्मितं वचोभारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ॥ ६ ॥
नानानिबन्धविषमैकपदैर्नितान्तं
शाखाङ्कचङ्क्रमणखिन्नधियामशङ्कम् ।
कर्तुम्प्रवेशमिह भारविकाव्यबन्धे
घण्टापथं किमपि नूतनमातनिष्ये ॥ ७ ॥
इहान्वयमुखेनैव सर्व्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ८ ॥

# किरातार्ज्जुनीयम्।

—◦◎◦—

## प्रथमः सर्गः।

श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः॥१॥

अथ तत्रभवान् भारविनामा कविः काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे। इत्याद्यालङ्कारिकवचनप्रामाण्यात्काव्यस्यानेकश्रेयः साधनतां काव्यालापांश्च वर्ज्जयेदिति निषेधशास्त्रस्यासत्काव्यविषयताञ्च पश्यन् किरातार्ज्जुनीयाख्यं महाकाव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्न परिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलसाधनत्वादाशीर्नमस्क्रिया वस्तुनिर्द्देशोवापि तन्मुखमित्याद्याशीर्व्वादाद्यन्यतमस्य प्रबन्धमुख लक्षणत्वाच्च वनेचरस्य युधिष्ठिर प्राप्तिरूपं वस्तु निर्दिशन् कथामुपक्षिपति। श्रियइति। आदितः श्रीशब्दप्रयोगाद्वर्णगणादि शुद्धिरत्रोपयुज्यते।

तदुक्तं। देवतावाचकाः शब्दाये च भद्रादि वाचकाः। ते सर्व्वे नैव निन्द्याः स्युर्लिपितोगणतोऽपि वेति। कुरूणां निवासाः कुरवोजनपदाः। तस्य निवास इत्यण् प्रत्ययः। जनपदे लुक्। तेषामधिपस्य दुर्य्योधनस्य सम्बन्धिनीं। शेषे षष्ठी। श्रियोराज्यलक्ष्म्याः। कर्तृकर्म्मणोः कृतीति कर्म्मणि षष्ठी। पाल्यते ऽनयेति पालनी तां प्रतिष्ठापिकामित्यर्थः प्रजारागमूलत्वात्सम्पद इति भावः। करणाधिकरणयोश्चेति सूत्रेणात्र करण ल्युट्। टिड्ढाणञित्यादिना ङीप्। प्रजासु जनेषु विषये। प्रजा स्यात् सन्ततौ जनइत्यमरः। वृत्तिं व्यवहारं वेदितुं ज्ञातुं यं वनेचरं प्रयुङ्क्त नियुक्तवान्। वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी। तदुक्तम्। स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्य्यमेतदेवाष्टलक्षणम्। एतदष्टविधमैथुनाभावः प्रशस्तिः। वर्णाद्ब्रह्मचारिणीति णिनि प्रत्ययः। तस्य लिङ्गं चिह्न मस्यास्तीति वर्णिलिङ्गी ब्रह्मचारिवेषवान् इत्यर्थः स नियुक्तोः वने चरतीति वनेचरः किरातः। भेदाः किरातशवरपुलिन्दाः म्लेच्छजातयइत्यमरः चरेष्टइति टप्रत्ययः तत्पुरुषे कृतिबहुलमित्यलुक्। विदितं वेदनमस्यास्तीति विदितः परवृत्तान्तज्ञानवान् इत्यर्थः। अर्शआदिभ्योऽजित्यच् प्रत्ययः। अथ वा कर्त्तरिकर्म्मधर्म्मोपचारात् विदितवृ-

क्तान्तो विदितः इत्युच्यते उभयत्रापि पीता गावो भुक्ता ब्रा-
ह्मणा विभक्ता भ्रातर इत्यादिवत्साधुत्वं न तु कर्त्तरि क्तः
सकर्म्मकेभ्यस्तस्य विधानाभावात्। अतएव भाष्यकारः।
अकारो मत्वर्थीयः विभक्तमेषामस्तीति विभक्ताः पीतमे-
षामस्तीति पीता भुक्तमेषामस्तीति भुक्ता इति सर्व्वत्र।
अथवा उत्तरपदलोपोऽत्र द्रष्टव्यः। विभक्तधना विभक्ताः
पीतोदकाः पीताः भुक्तान्ना भुक्ता इति अत्र लोपशब्दा-
र्थमाह कैयटः। गम्यार्थस्य प्रयोग एव लोपोऽभिमतः।
विभक्ता भ्रातर इत्यत्र च धनस्य यद्विभक्तत्वं तत् भ्रातृ-
ष्पपचर्य्यते पीता गावः इत्यत्राप्युदकस्य पीतत्वं गोष्वारो-
प्यते भुक्ता ब्राह्मणा इत्यत्र अन्नस्य भुक्तत्वं ब्राह्मणेषूपचर्य्येत
इति। तद्वदत्रापि वृत्तिगतं विदितत्वं वेदितरि वनेचरे
उपचर्य्यते। एतेन वनाय पीतप्रतिबद्धवत्सामिति पा-
तुन्न प्रथमं व्यवस्यति जलं युष्मास्वपीतेष्वेवमादयो व्या-
ख्याताः। अथ वा विदितः विदितवान् सकर्म्मकादप्य-
विवक्षिते कर्म्मणि कर्त्तरि क्तः। आश्रितः कर्त्तेत्यादौ
यथाहुः। धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्।
प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रियेति। प्रती-
हारादिना ज्ञापित इति वा। द्वैतवने द्वैताख्ये तपो-
वने यद्वा द्वे इते गते यस्मात्तत् द्वीत द्वीतमेव द्वैतं तच्च
तद्वनञ्च तस्मिन्। शोकमोहादिरहिते इत्यर्थः युधि
स्थो स्थिरं युधिष्ठिरं धर्म्मराजम्। हलन्तात्सप्तम्याः
सञ्ज्ञायामित्यलुक्। गवियुधिभ्यां स्थिर इति षत्वं। समाययौ

कृतप्रणामस्य महीं महीभुजे
जितां सपत्नेन निवेदयिष्यतः।
न विव्यथे तस्य मनोनहि प्रियं
प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥२॥

सम्प्राप्तः। अत्र वने वने चरइति द्वयोः स्वरव्यञ्जनसमुदाययोरेकधैवावृत्त्या वृत्त्यनुप्रासोनामालङ्कारः। अस्मिन् सर्गे वंशस्थवृत्तम् तस्य लक्षणम् जतौ तु वंशस्थमुदीरितं जराविति ॥ १ ॥

सम्प्रति तत्कालोचितत्वं आदेशयन् तस्य तद्गुणसम्पन्नत्वमादर्शयन्नाह। कृतप्रणामस्येति। कृतप्रणामस्य तत्कालोचितत्वात् कृतनमस्कारस्य सपत्नेन रिपुणा दुर्य्योधनेन। रिपुर्वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदइत्यमरः। जितां स्वायत्तीकृतां महीं महीभुजे युधिष्ठिराय क्रियाग्रहणात् सम्प्रदानत्वं निवेदयिष्यतोज्ञापयिष्यतः। लृटः सद्वेति शतृप्रत्ययः। तस्य वनेचरस्य मनोन विव्यथे। कथमीदृक् अप्रियं राज्ञे विज्ञापयामीति मनसि न चचालेत्यर्थः। व्यथभयचलनयोरिति धातोर्लिट्। उक्तमर्थमर्थान्तरोपन्यासेन समर्थयते। नहीति। हि यस्मात् हितमिच्छन्तीति हितैषिणः स्वामिहितार्थिनः पुरुषाः मृषा मिथ्याभूतं प्रियं वक्तुं नेच्छन्ति। अन्यथा कार्य्यविघातकतया स्वामिद्रोहिणः स्युरितिभावः। अनो-

द्विषां विघाताय विधातुमिच्छतो
रहस्यनुज्ञामधिगम्य भूभृतः।
स सौष्ठवौदार्य्यविशेषशालिनीं
विनिश्चितार्थामिति वाचमाददे ॥३॥

ऽसमर्थस्य मिथ्याभाषित्वमव्यूहकत्वञ्चेति चारगुणाइति नीतिवाक्यामृते ॥ २ ॥

तथापि प्रियार्हे राज्ञि कटुनिष्ठुरोक्तिर्न युक्तेत्याशङ्क्य स्वाम्यनुज्ञायां न दुष्यतीत्याशयेनाह द्विषामिति। रहस्येकान्ते स वनेचरोद्विषां शत्रूणां। कर्म्मणि षष्ठी। विघाताय द्विषोविहन्तुमित्यर्थः। तुमन्ताच्च भाववचनादिति चतुर्थी भाववचनाश्चेति तुमर्थे घञ् प्रत्ययः। अत्र तादर्थ्ये चतुर्थ्यामपि न दोषः तथापि प्रयोगवैचित्र्यविशेषस्याप्यलङ्कारत्वादेवं व्याचक्षते। विधातुं व्यापारङ्कर्तुमिच्छतः समानकर्त्तृकेषु तुमुन्। द्विषोविहन्तुमुद्युक्तस्यानस्येत्यर्थः अतएव भूभृतोयुधिष्ठिरस्यानुज्ञामधिगम्य प्राप्य। सुष्ठुभावः सौष्ठवं शब्दसामर्थ्यं सुष्ठुशब्दादुद्गात्रादित्वादञ् प्रत्ययः। उदारस्य भावः औदार्य्यं अर्थसम्पत्तिः तयोर्द्वन्द्वः सौष्ठवौदार्य्ये। अत्रौदार्य्यशब्दस्याजाद्यदन्तत्वेऽपि लक्षणहेत्वोः क्रियाया इत्यत्राल्पस्वरस्यापि हेतुशब्दस्य पूर्व्वनिपातकुर्व्वता सूत्रकृतैव पूर्व्वनिपातशास्त्रस्यानित्यत्वज्ञापनान्न पूर्व्वनिपातः। उक्तञ्च काशिकायाम्। अयमेव लक्षण-

क्रियासु युक्तैर्नृप चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥४॥

द्वयोरिति निर्द्देशः पूर्बनिपातव्यभिचारचिह्नमिति। ते एव विशेषः तयोर्वा विशेषः तेन शालते शोभते इति सौष्ठवौदार्य्यविशेषशालिनी तां ताच्छील्ये णिनिः। विनिश्चितार्थां विशेषतः प्रमाणतो निर्णीतार्थां इति वक्ष्यमाणरूपां वाचमाददे स्वीकृतवान् उवाचेत्यर्थः ॥ ३ ॥

प्रथमं तावदप्रियनिवेदकमात्मानम्प्रति अक्षोभं याचते क्रियास्विति। हे नृप क्रियासु कृत्यवस्तुषु युक्तैर्नियुक्तैरनुजीविभिर्भृत्यैश्चारादिभिरित्यर्थः चरन्तीति चराः पचाद्यच् तएव चाराः चरैः पचाद्यजन्तात्प्रज्ञादित्वादण् प्रत्ययः। तएव चक्षुर्येषां ते चारचक्षुषः। स्वपरमण्डलकार्य्याकार्य्यविलोकने चाराश्चक्षूंषि क्षितिपतीनामिति नीतिवाक्यात्स्मृते। तदुक्तं। गावोघ्राणेन पश्यन्ति वेदैः पश्यन्ति पण्डिताः। चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जना इति। प्रभवोनिग्रहानुग्रहसमर्थाः स्वामिनो न वञ्चनीयाः न प्रतारणीयाः सत्यमेव वक्तव्या इत्यर्थः चारापचारे चक्षुरपचार वद्राज्ञां पदे पदे निपात इति भावः। अतोऽप्रतार्य्यत्वाद्धेतोः असाधुः अप्रियं साधु प्रियं वा मदुक्तमिति शेषः वाशब्दोऽप्यर्थे

स किंसखा साधु न शास्ति योऽधिपं
हितान्न यः संशृणुते स किम्प्रभुः।
सदानुकूलेषु हि कुर्व्वते रतिं
नृपेष्वमात्येषु च सर्व्वसम्पदः॥५॥

वक्तुं सोढुमर्हसि कुतः हितं पथ्यं मनोहारि प्रियञ्च वचोदुर्लभं अतोमद्वचोऽपि हितत्वादप्रियमपि वक्तव्य मित्यर्थः॥ ४॥

तर्हि तूष्णीम्भावएव वरमित्याशङ्क्याह। स इति। यः सखा अमात्यादिः अधिपं स्वामिनं साधु हितं न शास्ति नोपदिशति। ब्रुविशासीत्यादिना शासेर्दुहादि-पाठाद्द्विकर्म्मकत्वम्। स हितानुपदेष्टा कुत्सितः सखा किंसखा दुर्मन्त्रीत्यर्थः। किमः चेपइति समासान्तप्रति-षेधः। तथा यः प्रभुर्निग्रहानुग्रहसमर्थः स्वामी हिता-दाप्तजनाद्धितोपदेष्टुः सकाशात्। आख्यातोपयोगे अपा-दानत्वात् पञ्चमी। न संशृणुते न शृणोति हितमिति शेषः। समोगम्यृच्छीत्यादिना सम्पूर्व्वाच्छृणोतेरकर्म्मक-त्वादात्मनेपदम् अकर्म्मकत्वं वैवक्षिकम्। स हितम-श्रोता प्रभुः किम्प्रभुः कुत्सित स्वामी पूर्ववत्समासः। सर्व्वथा सचिवेन वक्तव्यं श्रोतव्यञ्च स्वामिना एवञ्च राजमन्त्रिणोरैकमत्यं स्यादित्यर्थः। ऐकमत्यस्य फलमाह सदेति हि यस्मान्नृपेषु स्वामिषु अमा सह भवा अमात्या-स्तेषु च। अव्ययात् त्यप् अनुकूलेषु परस्परानुरक्तेषु

निसर्ग्गदुर्वोधमबोधविक्लवाः
क्व भूपतीनाञ्चरितं क्व जन्तवः।
तवानुभावोऽयमवेदि यन्मया
निगूढतत्त्वं नयवर्त्म विद्विषाम् ॥६॥

सत्सु सर्व्वसम्पदः सदा रतिमनुरागं कुर्व्वते कुर्व्वन्ति न जातु जहतीत्यर्थः। अतोमया वक्तव्यं त्वया च श्रोतव्यमिति भावः। अत्रैवं राजमन्त्रिणोर्हितानुपदेष्टृतदश्रवणनिन्दासामर्थ्यसिद्धे दैवमत्यलक्षणकारणस्य निर्दिष्टस्य सर्व्वसम्पत्सिद्धिरूपकार्य्येण समर्थनात् कार्य्येण कारणसमर्थनरूपोर्थान्तरन्यासोऽलङ्कारः। तदुक्तं सामान्यविशेषकार्य्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यास इति ॥ ५ ॥

सम्प्रति स्वाहङ्कारम्परिहरति। निसर्गेति। निसर्गदुर्व्वोधं स्वभावदुर्ग्रहम्। ईषद्दुरित्यादिना खल् प्रत्ययः। भूपतीनाञ्चरितं अबोधविक्लवाः अज्ञानोपहताजन्तवो-माद्दशाः पामरजनाइत्यर्थः क्वापि नोभयं सङ्गटते इत्यर्थः। तथापि निगूढतत्त्वं संवृतयाथार्थ्यं विद्विषां नयवर्त्म षाड्गुण्यप्रयोगः सन्धिविग्रह यानानि संस्थाप्यासनमेवच। द्वैधीभावश्च विज्ञेयाः षड्गुणानीति वेदिनामित्यादिरूपः यत् मया अवेदि ज्ञातमिति यावत्। विदेः कर्म्मणि लुङ्। अयमिदं वेदनमित्यर्थः। विधेयप्राधान्यात्पुंलिङ्गनिर्देशः। तवानुभावः सामर्थ्यं अनु-

विशङ्कमानो भवतः पराभवं
नृपासनस्थोऽपि वनाधिवासिनः।
दुरोदरच्छद्मजितां समीहते
नयेन जेतुञ्जगतीं सुयोधनः॥७॥

गतोभावोऽनुभावः राज्ञामप्रकृष्टोभावः इति घञन्तेन प्रादिसमासेनतूपसृष्टात् घञ्प्रत्ययः। श्रोणीभुवोऽनुपसर्ग-इत्यनुपसर्गाद्भवतेर्धातोर्घञ् विधानात्। अतएव काशिकायां कथं प्रभावोराज्ञामप्रकृष्टोभावइति प्रादिसमास इति। दोषपरिहारो सम्यक् ज्ञात्वैव विज्ञापयामि न तु त्वया कर्णकठोरम्प्रलपामीत्याशयः॥६॥

सम्प्रति यद्वक्तव्यन्तदाह। विशङ्कमान इति। सुखेन युध्यते स सुयोधनः। भाषायां शासियुधिदृशिधृषिमृषिभ्योयुज्वाच्यः। नृपासनस्थः सिंहासनस्थोऽपि वनमधिवसतीति वनाधिवासिनो वनस्थात् राज्यभ्रष्टादपीत्यर्थः। भवतस्त्वत्तः पराभवम्पराजयं विसङ्कमान उत्प्रेक्षमाणः सन्। दुष्टमुदरमस्येति दुरोदरं द्यूतम्। पृषोदरादित्वात्साधु। दुरोदरोद्यूतकारे पणे द्यूते दुरोदरमित्यमरः। तस्य छद्मना मिषेण जितां लब्धां दुर्नयार्ज्जितां जगतीं महीं। जगती विष्टपे मह्यां वास्तु च्छन्दोविशेषप्रयोरिति वैजयन्ती। नयेन नीत्या जेतुं वशीकर्त्तुं समीहते व्याप्रियते न तूदास्तइत्यर्थः। बलवत्स्वामिकमविशुद्धागमञ्च धनम्भुञ्जानस्य कुतोमनःसमाधिरिति

तथापि जिह्मः स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्य्यसङ्गमा
द्वरं विरोधोऽपि समं महात्मभिः ॥८॥

भावः । अत्र दुरोदरच्छद्मजितामिति विशेषणद्वारेण पदार्थम्प्रति हेतुत्वेनोपन्यासात् द्वितीयकाव्यलिङ्गमलङ्कारः । तदुक्तम् । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति ॥ ७ ॥

नयेन जेतुञ्जगतीं समीहत इत्युक्तं तत्प्रकारमाह । तथापीति । तथापि साशङ्कोऽपि जिह्मोवक्रोवञ्चकइति यावत् । स दुर्य्योधनोभवज्जिगीषया गुणैर्भवन्तमाक्रमितुमिच्छयेत्यर्थः । हेताविति तृतीया । गुणसम्पदा दानदाक्षिण्यादिगुणगरिम्णा करणेन शुभ्रं यशः तनोति स खलोगुणलोभनीयान्त्वत्सम्पदमात्मसात्कर्त्तुं त्वत्तोऽपि गुणवत्तामात्मनः प्रकटयतीत्यर्थः । नन्वेवं गुणिनः सतोऽपि सज्जनविरोधोमहान् दोषइत्याशङ्क्य सोऽपि सत्संसर्गलाभे नीचसङ्गमाद्वरमुत्कर्षावहत्वादित्याह । समिति । तथा हि भूतिं समुन्नयन्नुत्कर्षमापादयन् । लटः शतृशानचावित्यादिना शतृप्रत्ययः । पुनर्लट् ग्रहणसामर्थ्यात् प्रथमासामानाधिकरण्यम् । महात्मभिः समं सहेत्यर्थः । साकं सार्द्धं समं सहेत्यमरः । अनार्य्यसङ्गमात् दुर्ज्जनसंसर्गात् पञ्चमीविभक्तइति पञ्चमी । विरोधोऽपि वरं मनाक्

कृतारिषड्वर्गजयेन मानवी
मगम्यरूपाम्पदवीम्प्रपित्सुना।
विभज्य नक्तन्दिवमस्ततन्द्रिणा
वितन्यते तेन नयेन पौरुषम्॥९॥

प्रियः देवाहृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक् प्रियइत्यमरः। अत्र मैत्र्यपेक्षया मनाक् प्रियत्वं विरोधस्य। भूतिं समुत्पन्नयन्नित्यस्य पूर्ववाक्यान्वये समाप्तस्य वाक्यार्थस्य पुनरादानात्समाप्तपुनरात्ताख्यानदोषापत्तिः। तदुक्तम् काव्यप्रकाशे। समाप्तपुनरादानात्समाप्तपुनरात्तकमिति। न च वाक्यान्तरमेतत् येनोक्तदोषपरिहारः स्यात्। अर्थान्तरन्यासोऽलङ्कारः। स च भूतिसमुन्नयनस्य पदार्थविशेषणद्वारा विरोधवत्त्वम्प्रति हेतुत्वाभिधानरूपकाव्यलिङ्गानुप्राणित इति॥ ८॥

ननु कातर्य्यं केवला नीतिरित्याशङ्क्य नीतियुक्तस्यौरुषमस्येत्याह। कृतेति षसां वर्गः षड्वर्गः अरीणां अन्तः शत्रूणां कामक्रोधादीनां षड्वर्गोऽरिषड्वर्गः शिलभागवत्समासः तस्य जयः कृतोयेन तथोक्तेन विनीतेनेत्यर्थः। विनीताधिकारं प्रजापालनकृतिति भावः। अगम्यरूपाम्पुरुषमात्रदुःप्राप्यां मनोरिमां मानवीं मनूपदिष्टसदाचारघुसामित्यर्थः॥ पदवीं प्रजापालनपद्धतिं प्रपित्सुना प्रतिपत्तुमिच्छुना। प्रपद्यतेः सनन्तादुप्रत्ययः। सनि मीमेत्यादिना इसादेशः अत्र लोपोऽभ्यासस्येत्यभ्यास-

सखीनिव प्रीतियुजोऽनुजीविनः।
समानमानान् सुहृदश्च बन्धुभिः।
स सन्ततं दर्शयते गतस्मयः
कृताधिपत्यामिव साधु बन्धुताम्॥१०॥

लोपः। अस्ता तन्द्रिरालस्यं यस्य तेनास्ततन्द्रिणा अनलसेनेत्यर्थः। तद्रिः सौत्रोधातुः तस्मादवङ्क्रादयश्चेत्यौणादिकः क्रिन्प्रत्ययः। कृदिकारादक्तिनइति वा ङीष्। तन्त्री घटी तरी तन्द्रीति ङीषन्तोपीति चीरस्वामी। तथा रामायणप्रयोगः निस्तन्द्रिरप्रमत्तश्च स्वदोषे परदोषवदिति। तेन दुर्य्योधनेन पुरुषस्य कर्म्म पौरुषं पुरुषकार उद्योगइति यावत्। युवादिगत्वादण् प्रत्ययः। पौरुषं पुरुषस्योक्तं भावे कर्म्मणि तेजसीति विश्वः। नक्तञ्च दिवा च नक्तन्दिवं अहोरात्रमित्यर्थः। अचतुरेत्यादिना सप्तम्यर्थवृत्त्योरव्यययोर्द्वन्द्वनिपातेऽच् समासान्तः। विभज्य अस्यां वेलायामिदं कार्य्यमकार्य्यमिति विभागं कृत्वा नयेन नीत्या वितन्यते विस्तार्य्यते॥९॥

सम्प्रति भृत्याद्यनुरागमाह। सखीनीति। गतस्मयोनिरहङ्कारः अतएव स दुर्य्योधनः सन्ततमनारतं साधु सम्यगकपटमित्यर्थः। अनुजीविनोभृत्यान् प्रीतियुजः स्निग्धान् सखीनिव मित्राणीव दर्शयते लोकस्येति शेषः। हेतुमति चेति णिच् णिचश्चेत्यात्मनेपदम्। शोभनं हृदयं येषां तान् सुहृदोमित्राणि च। सुहृद्दुर्हृदौ मित्रा-

मित्रयोरिति निपातः । बन्धुभिर्मित्रादिभिः समानमानांस्तुल्यसत्कारान् दर्शयते । बन्धूनां समूहो बन्धुता ताम् । ग्रामजनबन्धुसहायेभ्यस्तल् । कृतमाधिपत्यं स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते बन्धूनधिपतीनिव दर्शयते इत्यर्थः । यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान् सम्भावयतीत्यर्थः । अनुजीव्यादीनां कर्तुरीप्सिततमं कर्मेति कर्मत्वम् । पूर्वे त्वस्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयन्ति । स राजा अनुजीव्यादीन् सख्यादीनिव दर्शयते । सख्यादय इव ते तु तम्पश्यन्ति सख्यादिभावेन पश्यतस्तां स्तया दर्शयते स्वयमेव छन्दानुवर्तितया स्वदर्शनं तेभ्य प्रयच्छतीत्यर्थः । अत्रापि स्वसेप्सितकर्मत्वम् अणिचि कर्तुरनुजीव्यादेरभिवादिदृशोरात्मनेपदमुपसंख्यानमिति पाक्षिकं कर्मत्वम् । एवञ्चात्राण्यन्तकर्मणो राज्ञो ण्यन्ते कर्तृत्वेऽपि आरोहयते हस्ती स्वयमेवेत्यादिवत् पश्यमाणकर्मान्तराभावान्नायं णेरणादिसूत्रस्य विषय इति मत्वा णिचश्चेत्यात्मनेपदमप्रतिपेदिरे । भाष्ये तु णेरणादिसूत्रविषयत्वमप्युक्तम् । यथाह । पश्यन्ति भृत्या राजानं दर्शयते भृत्यान् राजा दर्शयते भृत्यैराजा अत्रात्मनेपदं सिद्धं भवतीति । अत्राह कैयटः । ननु कर्मान्तरसद्भावादत्रात्मनेपदेन भाव्यम् । उच्यते । अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय उन्नीयते अण्यन्तावस्थायां ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावादात्मनेपदं न भवति । यथा

असक्तमाराधयतो यथायथं
विभज्य भक्त्या समपक्षपातया ।
गुणानुरागादिव सख्यमीयिवा
न्न बाधतेऽस्य त्रिगणः परस्परम् ॥११॥

स्त्वमारोहयति मनुष्यानिति इह त्वयन्तात्स्यायां कर्तृणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदमिति ॥१०॥

नचायं त्रिवर्गात्ममाद्यतीत्याह । असक्तमिति । यथायथं यथास्वं विभज्य अप्रकीर्णरूपं विविच्येत्यर्थः । यथास्वे तु यथायथमिति निपातनात् द्विर्भावोनपुंसकत्वञ्च ह्रस्वो-नपुंसके प्रातिपदिकस्येति ह्रस्वत्वं पक्षे पातः पक्षपातः अवस्त्रिविशेषः समस्तुल्योयस्यां सा तथा तया समपक्षपातया भक्त्या अनुरागविशेषेण । पूज्येष्वनुरागोभक्तिरित्युपदेशः पूज्यश्चायं त्रिवर्ग इति भावः । असक्तमनासक्तमव्यसनितयेति यावत् । आराधयतः सेवमानस्यास्य दुर्य्योधनस्य त्रयाणां धर्म्मार्थकामानां गणस्त्रिगणस्त्रिवर्गः । त्रिवर्गोधर्म्मकामार्थैश्चतुर्व्वर्गः स मोक्षकैरित्यमरः । गुणानुरागात्तदीयगुणेष्वनुरागाद्गुणवदाश्रयलोभादित्यर्थः । सख्यं मैत्रीम् । सख्युर्य्य इति यप्रत्ययः । ईयिवान् उपगतवानिवेत्युत्प्रेक्षा । उपेयिवाननाश्वानननूचानश्चेति क्वसुप्रत्ययान्तो निपातः । नात्रोपसर्गस्तन्त्रमिति काशिकाकारश्चाह स्म । परस्परं न बाधते समवर्त्तित्वादस्य धर्म्मार्थ-

निरत्ययं साम न दानवर्ज्जितं
न भूरि दानं विरहय्य सत्क्रियाम् ।
प्रवर्त्तते तस्य विशेषशालिनी
गुणानुरोधेन विना न सत्क्रिया ॥१२॥

कामाः परस्परानुपमर्द्देन वर्द्धन्त इत्यर्थः । उक्तञ्च धर्म्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्य इति ॥११॥

अथ श्लोकत्रयेणोपायकौशल्यं दर्शयन्नादौ सामदाने दर्शयति । निरत्ययमिति । तस्य दुर्य्योधनस्य निरत्ययं निर्बाधममायिकमित्यर्थः । अन्यथा जनानान्दुग्रहत्वादिति भावः । साम सान्त्वम् । साम सान्त्वमुभे समे इत्यमरः । दानवर्ज्जितं न प्रवर्त्तते । अन्यथा लुब्धप्रवर्त्तनस्य मुद्राप्रियैर्वाक्यैर्दुष्करत्वादिति भावः । उक्तञ्च । लुब्धमर्थेन गृह्णीयात्साधुमञ्जलिकर्म्मणा । मूर्खंच्छन्दानुरोधेन तत्त्वार्थेन च पण्डितमिति । तथा भूरि प्रभूतं न तु कदाचित्स्वल्पमित्यर्थः । दानं धनत्यागः । सादित्यादरार्थेऽव्ययम् । आदरानादरयोः सदसतीइति निपातसंज्ञाधारणात् । तस्य क्रियां सत्क्रियां विरहय्य विहाय । ल्यपि लघुपूर्वादित्ययादेशः । न प्रवर्त्तते अनादरे दानवैफल्यादिति भावः । न चैवं सर्व्वत्र येनाविवेकित्वं कोशक्षानिश्च स्यादित्याह । प्रेति । विशेषशालिनी अतिशययोगिनी सत्क्रिया चादरक्रिया गुणानुरोधेन गुणानुरागेण विना न प्रवर्त्तते । पृथग्विनेत्यादिना तृतीया ।

वसूनि वाञ्छन्न वशी न मन्युना
स्वधर्म्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा
निहन्ति दण्डेन स धर्म्मविप्लवम् ॥१३॥

गुणेष्वेवादरोभूरिदानञ्चेति नोतद्दोषावकाशइत्यर्थः । अतोत्तरोत्तरस्य पूर्वंपूर्वंविशेषणतया स्थापनादेकावल्यलङ्कारः । तदुक्तङ्काव्यप्रकाशे । स्थाप्यतेऽपोह्यते वापि यथा पूर्वं परम्परम् । विशेषणतया यत्र वस्तु सैकावली द्विधेति ॥१२॥

अथ दण्डप्रकारमाह । वसूनीति । वशीस दुर्य्योधनोवसूनि धनानि वाञ्छन्न लोभादित्यर्थः । वसु तोये धने मणाविति वैजयन्ती । निहन्तीति शेषः । तथा मन्युना कोपेन न च । मन्युर्दैन्ये क्रतौ क्रुधीत्यमरः । धर्म्मशास्त्रानुसारेण क्रोधलोभविवर्ज्जितइति स्मरणादित्यर्थः । किन्तु निवृत्तकारणोनिवृत्तलोभादिनिमित्तः सन् स्वधर्म्मइत्येव स्वस्य राज्ञः अतोममायं धर्म्मोममेदङ्कर्त्तव्यमित्यस्मादेव हेतोरित्यर्थः । अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशोमहदाप्नोति नरकञ्चैव गच्छतीति स्मरणादिति भावः । गुरूपदिष्टेन प्राड्विवेकोपदिष्टेन । धर्म्मशास्त्रम्पुरस्कृत्य प्राड्विवेकमते स्थितः । समाहितमतिः पश्येद्व्यवहारा ननुक्रमादिति नारदस्मरणात् । दण्डेन दमेन शिक्षयेत्यर्थः रिपौ सुतेऽपि वा

विधाय रक्षान् परितः परेतरा
नशङ्किताकारमुपैति शङ्कितः।
क्रियापवर्गेष्वनुजीविसात्कृताः
कृतज्ञतामस्य वदन्ति सम्पदः ॥ १४ ॥

स्थितमिति शेषः। एतेनास्य समदर्शित्वमुक्तम्। धर्म्मविप्लवन्धर्म्मव्यतिक्रममधर्म्ममिति यावत्। निहन्ति निवारयति। दुष्टएवास्य शत्रुः शिष्टएव बन्धुर्नतु सम्बन्धनिबन्धनः पक्षपातोस्तीत्यर्थः ॥ १३ ॥

सम्प्रति भेदकौशलन्दर्शयति। विधायेति। शङ्का सञ्जातास्य शङ्कितोऽविश्वस्तः सन् परितः सर्व्वत्र स्वपरमण्डले परेतरान् आत्मीयान् अवञ्चकानितियावत् यद्वा परान् इतरयन्ति भेदेनात्मसात्कुर्व्वन्तीति परेतरान्। तत्करोतीति ण्यन्तात्कर्म्मण्यण् प्रत्ययः। रक्षन्तीति रक्षान् रक्षकान् मन्त्रगुप्तिसमर्थानित्यर्थः। नन्दिग्रहीत्यादिना पचाद्यच्। विधाय कृत्वा नियुज्येत्यर्थः अशङ्किताकारमुपैति स्वयमविश्वस्तोऽपि विश्वस्तवदेव व्यवहरन् परमुखेनैव परान् भिनत्तीत्यर्थः। न च तान् रक्षानुपेक्षते येन तेऽपि विकुर्व्वीरन्नित्याह। क्रियेति। क्रियापवर्गेषु कर्म्मसमाप्तिषु अनुजीविसात्कृता भृत्याधीनाः कृतातत्परावर्त्तितया दत्ता इत्यर्थः। देयेत्राचेति साति प्रत्ययः। सम्पदोऽस्य राज्ञः कृतज्ञता सुपकारित्वं वदन्ति प्रीतिदानैरेवास्य कृतज्ञत्वम्प्रकाश्यते न तु वाङ्मा-

अनारतन्तेन पदेषु लम्भिता
विभज्य सम्यग्विनियोगसत्क्रियाः ।
फलन्त्युपायाः परिवृंहितायती
रुपेत्य सङ्घर्षमिवार्थसम्पदः ॥ १५ ॥
अनेकराजन्यरथाश्वसङ्कुल
न्तदीयमास्थाननिकेतनाजिरम् ।

सेवेत्यर्थः । स्वतश्च राजन्यनुजीविनोऽनुरज्यन्तेऽनुरक्ताश्च तं रक्षन्तीति भावः ॥ १४ ॥

अथोपायप्रयोगस्य फलवत्तां दर्शयति । अनारतमिति । तेन राज्ञा दुर्योधनेन पदेषूपायवस्तुषु । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः । सम्यगसङ्कीर्णसमव्यस्ताश्च विभज्य विविच्य विनियोगएव सत्क्रिया अनुग्रहः सत्कारइति यावत् यासान्ताः लम्भिताः स्थानेषु सम्यक् प्रयुक्ताइत्यर्थः । उपायविशेषणं वा उपायाः सामादयः सङ्घर्षम्परस्परस्पर्द्धामुपेत्येवेत्युत्प्रेक्षा परिवृंहितायतीः प्रचितोत्तरकालाः स्थिराइत्यर्थः अर्थसम्पदोऽनारतमजस्रम्फलन्ति प्रसुवतइत्यर्थः ॥ १५ ॥

अर्थसम्पदमेवाह । अनेकेति । प्रचुरमच्छदस्य सप्तपर्णपुष्पस्य गन्धइव गन्धोयस्यासौ प्रचुरमच्छदगन्धिः । सप्तम्युपमानेत्यादिना बहुव्रीहिरुत्तरपदलोपश्च । उपमानाच्चेति समासान्तइकारः । नमाग्रायुपायनमुपहारभूतायेहस्तिनस्तेषां मदः । उपायनमुपग्राह्यमुपहार.

नयत्ययुग्मच्छदगन्धिरार्द्रतां
भृशं नृपोपायनदन्तिनां मदः ॥१६॥
सुखेन लभ्या दधतः कृषीवलै-
रकृष्टपच्या इव शस्यसम्पदः।

स्थयोपदेत्यमरः। राज्ञामपत्यानि पुमांसोराजन्याः क्षत्रियाः राजश्वशुराद्यत् इति यत्प्रत्ययः राज्ञोऽपत्ये जाति ग्रहणादृष्। रथाश्चाश्वाश्च रथाश्वम्। सेनाङ्गत्वादेकवद्भावः। अनेकेषां राजन्यानां रथाश्वेन सङ्कुलं व्याप्तं तदीयमास्थान निकेतनाजिरं सभामण्डपाङ्गणम्। अङ्गणञ्चत्वराजिरे इत्यमरः। भृशमत्यर्थमार्द्रताम्पङ्किलत्वन्नयति। एतेन महासमृद्धिरस्योक्ता अतएवोदात्तालङ्कारः। तथाचालङ्कारसूत्रम्। समृद्धिमद्वस्तु वर्णनमुदात्तमिति ॥१६॥

सम्प्रति जनपदक्षेमकरत्वमाह। सुखेनेति। चिराय तस्मिन् दुर्योधने क्षेमं वितन्वति क्षेमङ्करे सति देवः पर्ज्जन्यएव माता येषान्ते देवमातृकाः दृष्ट्यम्बुजीविनो-देशाः ते न भवन्तीत्यदेवमातृका नदीमातृका इत्यर्थः। देशोनद्यम्बुदृष्ट्यम्बुसम्पन्नव्रीहिपालितः। स्यान्नदीमातृकोदेवमातृकश्च यथाक्रममित्यमरः। एतेनास्य कुल्यादिपूर्त्तप्रवर्त्तकत्वमुक्तम्। कुरूणां निवासाः कुरवोजनपदविशेषाः। कृष्टेन पच्यन्तइति कृष्टपच्याः। राजसूयेत्यादिना कर्म्मकर्त्तरि क्यप्प्रत्ययान्तोनिपातः। तद्विपरीता

वितन्वति क्षेममदेवमातृका
श्चिराय तस्मिन् कुरवश्चकासते ॥१७॥
उदारकीर्त्तेरुदयन्दयावतः
प्रशान्तबाधं दिशतोऽभिरक्षया ।

अनुष्ठपश्चादिव । कृषिरेषामस्तीति कृषिवलैः कर्षकैरित्यर्थः । रजः कृष्यादिना वलच् प्रत्ययः वलइति दीर्घः । सुखेन अक्लेशेन लभ्या लब्धुं शक्याः शस्यसम्पदः दधतोधारयन्तः । नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः । चकासते सर्व्वोत्कर्षेण वर्त्तन्त इत्यर्थः । अदभ्यस्तादिति झेरदादेश जक्षित्यादयः षडित्यभ्यस्तसंज्ञा । सम्पन्नजनपदत्वादसन्तापकरत्वाच्च दुःसाध्योयमिति भावः ॥१७॥

नन्वेवञ्जनपदानुवर्त्तिनः कथमर्थलाभइत्यतआह । उदारेति । उदारकीर्त्तेर्म्महायशसः । उदारोदातृमहतोरित्यमरः । दयावतः परदुःखप्रहरणेच्छा अतएव प्रशान्तबाधम्प्रशमितोपद्रवं यथास्यात्तथा इति क्रियाविशेषणम् उदयविशेषणं वा । वा दान्तशान्तेत्यादिना शमिधातोर्ण्यन्तान्निष्ठान्तोनिपातः । अभिरक्षया सर्व्वतस्त्राणेनोदयं वृद्धिन्दिशतः सम्पादयतः वसूपमानस्य कुवेरोपमस्य । वसुर्मयूखाग्निधनाधिपेष्विति विश्वः । अस्य दुर्योधनस्य गुणैर्दयादाक्षिण्यादिभिरुपस्नुता द्राविता मेदिनी वसूनि धनानि । वसु तोये धने मणाविति वैजयन्ती । स्वयमदुग्धे अक्लेशेन दुग्धइत्यर्थः । दुहेः कर्म्म-

स्वयम्प्रदुग्धेऽस्य गुणैरुपस्नुता
वसूपमानस्य वसूनि मेदिनी ॥१८॥
महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्त्तयः।

कर्त्तरि लट्। न दुहस्नुनमां यक् चिणाविति यक् प्रतिषेधः। यथा कैश्चिद्विदग्धैर्न नवप्रसूता रक्षिता च गौः स्वयम्प्रदुग्धे इति भावः। अलङ्कारस्तु विशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति सर्व्वस्वकारः। अत्र प्रतीयमानया गवा सह प्रकृतायाः मेदिन्याभेदेऽभेदलक्षणातिशयोक्तिवशादपोह्यत्वेनोक्तिरिति सङ्क्षेपः॥१८॥

वीरानुकूल्यमाह। महौजस इति। महौजसमोहाबलाः। अन्यथा दुर्बलानामनुपकारित्वादिति भावः। मानः कुलशीलाद्यभिमान एव धनं येषान्ते मानधनाः। अन्यथा कदाचिद्बलदर्पाद्विकुर्व्वीरन्निति भावः। धनार्चिताः धनैरर्चिताः सत्कृताः अन्यथा दारिद्र्यादेनञ्जह्युरिति भावः। संयति संग्रामे लब्धकीर्त्तयो बद्धयशसइत्यर्थः। अन्यथाकदाचिन्मुह्येयुरिति भावः। संहताः मिथः सङ्गताः स्वार्थनिष्ठान भवन्तीति न संहताः नञर्थस्य न शब्दस्य सुप्सुपेति समासः। भिन्नवृत्तयोमिथोविरोधात् स्वामिकार्य्यविघातकरान् भवन्तीति नभिन्नवृत्तयः पूर्ववत्समासः। अन्यथा स्वामिकार्य्यविघातकतया स्वामिद्रोहिण स्युरित्युभयत्रापि तात्पर्य्यार्थः। धनुर्भृतोधानुष्काः।

नसंहतास्तस्य नभिन्नवृत्तयः

प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥१९॥

महीभृतां सच्चरितैश्चरैः क्रियाः

स वेद निःशेषमशेषितक्रियः ।

महोदयैस्तस्य हितानुबन्धिभिः

प्रतीयते धातुरिवेहितम्फलैः ॥२०॥

आयुधीयमात्रोपचरणमेतत् । प्राधान्याद्बहुग्रहणं तस्य दुर्योधनस्यासुभिः प्राणैः प्रियाणि समीहितुङ्कर्तुं वाञ्छन्ति । आनृण्यार्थं प्राणान्दातुमिच्छन्ति अन्यथा दोषश्रवणादिति भावः । अत्र महौजसादिपदार्थानाम्प्राणदानकर्त्तव्यताम्प्रति विशेषणगत्या हेतुत्वाभिधानात् काव्यलिङ्गमलङ्कारः । लक्षणन्तूक्तम् । तथा साभिप्रायविशेषणत्वात्परिकरालङ्कार इति । द्वयोस्तिलतण्डुलवद्विभक्ततया स्फुरणात्संसृष्टिः ॥१९॥

सम्प्रति स्वराष्ट्रवत्परराष्ट्रवृत्तान्तमपि वेत्तीत्याह । महीभृतामिति । अशेषितक्रियः समापितकृत्यः सफलोदयकर्मेत्यर्थः । स दुर्योधनः सच्चरितैः शुद्धचरितैरवञ्चकैरित्यर्थः । चरन्तीति चरास्तैश्चरैः प्रणिधिभिः । प्रचाद्यच् महीभृतां क्रिया प्रारम्भान् निःशेषं वेद वेत्ति । विदोलटोवेति णलादेशः । स्वरहस्यन्तु न कश्चिद्वेदेत्याह । महोदयैरिति । धातुरिव तस्य दुर्योधनस्येहितमुद्योगो महोदयैर्महद्भिर्हितमनुबध्नन्त्यनुसन्ध-

न तेन सज्यं क्वचिदुद्यतन्धनु-
र्कृतन्न वा कोपविजिह्ममाननं ।
गुणानुरागेण शिरोभिरुह्यते
नराधिपैर्माल्यमिवास्य शासनम् ॥२१॥
स यौवराज्ये नवयौवनोद्धतं
निधाय दुःशासनमिद्धशासनः ।

त्नोति हितानुबन्धिभिरित्यर्थः । फलैः कार्य्यसिद्धिभिः प्रतीयते ज्ञायते फलानुमेयास्तस्य प्रारम्भाइत्यर्थः ॥ २० ॥

मित्रबलमाह । नेति । तेन राज्ञा क्वचित् कुत्रापि सहज्यया मौर्व्या सज्यं मौर्व्वी ज्या शिञ्जिनी गुण-इत्यमरः । तेन सहेति तुल्ययोगइति बहुब्रीहिः । धनुर्नोद्यतं नोर्द्धीकृतम् आननं वा कोपविजिह्मं कोपेन कुटिलं न कृतं यस्य कोपएव नोदेति कुतस्तस्य युद्ध-प्रसक्तिरिति भावः । कथन्तर्ह्याज्ञां कारयति राज्ञइत्य-त्राह गुणेति । गुणेषु दयादाक्षिण्यादिषु अनुरागेण प्रेम्णा माल्यपक्षे सूत्रानुषङ्गेण यद्वा सौरभ्यगुणलोभेन नराधिपैरन्यभूपालैरस्य शासनम् आज्ञा मालेव माल्यं तदिव । चातुर्व्वर्ण्यादित्वात् स्वार्थे ष्यञ् इति क्षीर-स्वामी । शिरोभिरुह्यते धार्य्यते । वचिस्वपियजादीनां कि-तीति यकि सम्प्रसारणम् । अत्रोपमा स्फुटैव ॥ २१ ॥

समृद्धस्य धार्म्मिकत्वमाह । सइति । इद्धशासनः प्रतिहताज्ञः स दुर्य्योधनोनवयौवनोद्धतं प्रगल्भं धुर-

मखेष्वखिन्नोऽनुमतः पुरोधसा
धिनोति हव्येन हिरण्यरेतसम् ॥२२॥
प्रलीनभूपालमपि स्थिरायति
प्रशासदावारिधि मण्डलम्भुवः।

न्वरमित्यर्थः। दुःखेन शिष्यतइति दुःशासनस्तम्। भाषायां शासियुधीत्यादिना खल्वर्थे युच् प्रत्ययः। यौवराज्ये युवराजकर्म्मणि। ब्राह्मणादित्वात् ष्यञ्। निधाय नियुज्येत्यर्थः पुरोधसा पुरोहितेन अनुमतोऽनुज्ञातस्त-स्मिन् याजके सतीत्यर्थः। तदुल्लङ्घने दोषस्मरणादिति भावः। निष्ठेति भूतार्थे क्तः न तु मतिबुद्धीत्यादिना वर्त्तमानार्थे। अन्यथा पुरोधसेत्यत्र क्तस्य च वर्त्तमानइति षष्ठीस्यात्। अखिन्नोऽनलसोमखेषु क्रतुषु हव्येन हविषा हिरण्यं रेतोयस्य तम् हिरण्यरेतसम् अनलं धिनोति प्रीणा यति। धिवेः प्रीणनार्थात् धिन्विकृण्व्योरच्चेत्युप्रत्ययः। अकारश्चान्तादेशः॥ २२॥

स चेत्तादृशउद्योगी तर्हि प्रजाभिर्न्निरुद्योगैर्भाव्य-मित्याशङ्क्योद्योगाभावान्दर्शयति। प्रलीनेति। स दुर्य्यो-धनः प्रलीनभूपालं निःसपत्नमित्यर्थः स्थिरायति चिरस्था-यीत्यर्थः भुवोमण्डलं आवारिधिभ्यः आवारिधि। आङ् मर्य्यादाभिविध्योरित्यव्ययीभावः। प्रशासदाज्ञापय-न्नपि। यचित्यादयः षड्त्यिभ्यस्तसंज्ञानाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः। तत् त्वत्तः एष्यतीरागमिष्यतीरा

सचिन्तयत्येव भियस्त्वदेष्यती
रहो दुरन्ताबलवद्विरोधिता ॥ २३ ॥
कथाप्रसङ्गेन जनैरुदाहृता
दनुस्मृताखण्डलसूनुविक्रमः ।

गामिनीरिति यावत् । धातूनामनेकार्थत्वादुक्तार्थसिद्धिः । अथवा आङ्पूर्व्वः पाठः एत्येधत्यूठ्स्विति वृद्धिः लृटः सद्वेति शतृप्रत्ययः उगितश्चेति ङीप् आच्छीनद्योर्नुमिति विकल्पान्नुम भावः । भियोभयहेतूञ्छिपदइत्यर्थः चिन्तयति आलोचयत्येव । सएवाह । अहो बलवद्विरोधिता दुरन्ता दुष्टावसाना । सार्व्वभौमस्यापि प्रबलैः सपत्नैः सह वैरमनर्थपर्य्यवसाय्येवेति तात्पर्य्यम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ २३ ॥

ननु गूढाकारेङ्गितस्य तस्य भयं त्वया कथं निरधारीत्यत्राह । कथेति । कथाप्रसङ्गेन गोष्ठीवचनेन जनैः तत्तैरित्यर्थः । अन्यत्र कथाप्रसङ्गेन विषवैद्येन । कथाप्रसङ्गोवार्त्तायां विषवैद्येऽपि वाच्यवदिति विश्वः । एकवचनस्यातन्त्रत्वाज्जनविशेषणम् । यद्वा कथाप्रसङ्गे इनाश्च ते जनास्तैरित्येकम्पदम् । उदाहृतादुच्चारितात् तवाभिधानान्नामधेयात् नामधेयस्मरणाद्धेतोः । हेताविति पञ्चमी । आख्याह्वे अभिधानञ्च नामधेयञ्च नाम चेत्यमरः । अन्यत्र तवाभिधानात् नामैकदेशग्रहणे नाममात्रग्रहणमिति न्यायात् तव वच तवौ तार्क्ष्यवासुकी तयोरभिधानं

तवाभिधानाद्व्यथते नताननः
स दुःसहान्मन्त्रपदादिवोरगः ॥२४॥
तदाशु कर्त्तुन्त्वयि जिह्ममुद्यते
विधीयतान्तत्र विधेयमुत्तरम्।

यस्मिन्पदे तस्मात् अनुस्मृताखण्डलसूनुविक्रमः स्मृतार्ज्जुनपराक्रमः सन् दुःसहादतिदुःसहात् मन्त्रपदात् मन्त्रशब्दात् स्मारकाद्धेतोः आखण्डलसूनुरिन्द्रानुजउपेन्द्रो विष्णुरिति यावत्। सूनुः पुत्रेऽनुजे रवाविति विश्वः। तस्य विःपक्षी गरुड़इत्यर्थः। तस्य क्रमः पादविक्षेपः सोऽनुस्मृतोयेन स तथोक्तः। स्मृतगरुड़महिमा उरगइव नताननः सन्। उरगः पन्नगोभोगीत्यमरः। व्यथते दुःखायते। पीड़ाबाधा व्यथा दुःखमित्यमरः। अत्युत्कटभयदोषादिविकाराद्वैरादिति भावः। सर्व्वतोजयमन्विच्छेत्पुत्रादिच्छेत्पराजयमिति न्यायादर्ज्जुनोत्कर्षकथनं युधिष्ठिरस्य भूषणमेवेति सर्व्वमवदातम् ॥ २४ ॥

निगमयेति। तदिति। तत्तस्मात्कारणात्त्वयि जिह्मं कपटङ्कर्त्तुम् उद्यते त्वाञ्जिघांसावित्यर्थः। तत्र तस्मिन्दुर्य्योधने विधेयं कर्त्तव्यमुत्तरम्प्रतिक्रिया आशु विधीयतां क्रियताम्। ननु कर्त्तव्यमपि त्वयैवोच्यतामिति चेत्तत्राह। परेति। परप्रणीतानि परोक्तानि वचांसि चिन्वतां गवेषयतां मादृशां वार्त्ताहारिणामित्यर्थः। गिरः प्रवृत्तिसाराः वार्त्तामात्रसाराः। वार्त्ताप्रवृत्तिर्वृत्तान्त इत्यमरः।

परप्रणीतानि वचांसि चिन्वता-
म्प्रवृत्तिसाराः खलु मादृशाङ्गिरः ॥२५॥
इतीरयित्वा गिरमात्तसत्क्रिये
गतेऽथ पत्यौ वनसन्निवासिनाम् ।
प्रविश्य कृष्णासदनम्महीभुजा
तदाचचक्षेऽनुजसन्निधौ वचः ॥२६॥
निशम्य सिद्धिं द्विषतामपाकृती
स्ततस्ततस्त्या विनियन्तुमक्षमा

वार्त्तामात्रवादिनोत्रयन्तु कर्त्तव्यार्थोपदेशसमर्थाः अत-स्त्वयैव निर्द्धार्य्यं कार्य्यमिति भावः। सामान्येन विशेष-समर्थनादर्थान्तरन्यासः ॥ २५ ॥

इतीति। वनसन्निवासिनाम्पत्यौ वनेचराधिपे इति गिरमीरयित्वा उक्त्वा आत्तसत्क्रिये गृहीतपारितोषिके गते सति। तुष्टिदानमेव चाराणां हि वेतनं ते हि तल्लोभात् स्वामिकार्य्येष्वतीवत्वरयन्तइति नीति वाक्या-मृते। अथ महीभुजा राज्ञा कृष्णासदनन्द्रौपदीभवनम्प्र-विश्यानुजसन्निधौ तद्वनेचरोक्तम् वचो वाक्यम् आच चक्षे आख्यातम् अथवा कृष्णेति पदच्छेदः। सदनम्प्रविश्यानुज-सन्निधौ तद्वचः कृष्णा आचचक्षे आख्याता। चक्षिङोदुहा-देर्द्विकर्म्मकत्वादप्रधानकर्म्मणि लिट् ॥ २६ ॥

निशम्येति। अथ द्रुपदात्मजा द्रौपदी द्विषतां सिद्धिं

नृपस्य मन्युव्यवसायदीपिनी
रुदाजहार द्रुपदात्मजा गिरः ॥२७॥
भवादृशेषु प्रमदाजनोदित
म्भवत्यधिक्षेपइवानुशासनम्।
तथापि वक्तुं व्यवसाययन्ति मा
न्निरस्तनारीसमयादुराधयः ॥२८॥

इङ्गिरूपान्निशम्य ततस्तदनन्तरं ततोद्विषद्भ्यआगता-स्ततस्त्याः। अव्ययात्त्यबिति त्यप्। अपाकृतीर्विकारा-न्नियन्तुन्निरोद्धुम् अक्षमासती नृपस्य युधिष्ठिरस्य मन्युव्यव-साययोः क्रोधोद्योगयोः दीपिनीः संवर्द्धिनीर्गिरोवाक्यान्यु-दाजहार जगादेत्यर्थः ॥ २७ ॥

भवादृशेष्विति। भवादृशाभवद्विधाः पण्डिताइत्यर्थः। तेषु विषये। त्यदादिष्वित्यादिना कञ् आसर्वनाम्न इत्याकारादेशः। प्रमदाजनोदितं स्त्रीजनोक्तम्। वदेः क्तः वचिस्वपीत्यादिना सम्प्रसारणम्। अनुशासनं नि-योगवचनमधिक्षेपः तिरस्कारइव भवति। अतोन युक्तं वक्तुमित्यर्थः। तथापि वक्तुमनुचितत्वेऽपि। निरस्तनारी-समयास्त्याजितशालीनतारूपस्त्रीसमाचाराः। समयाः शपथाचारकालसिद्धान्तसंविदइत्यमरः। दुराधयः सम-योल्लङ्घन हेतुत्वात् दुष्टामनोव्यथाः। पुंस्याधिर्मानसी व्यथेत्यमरः। मां वक्तुं व्यवसाययन्ति प्रेरयन्ति। न किञ्चि-दयुक्तन्दुःखिनामिति भावः ॥ २८ ॥

अखण्डमाखण्डलतुल्यधामभि
श्चिरन्धृता भूपतिभिः स्ववंशजैः।
त्वयात्महस्तेन मही मदच्युता
मतङ्गजेन स्रगिवापवर्ज्जिता ॥२९॥

व्रजन्ति ते मूढ़धियः पराभव
म्भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधा
नसंवृताङ्गान्निशिता इवेषवः ॥३०॥

अखण्डमिति। आखण्डलतुल्यधामभिरिन्द्रतुल्यप्रभावैः। धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोरिति हेमः। स्ववंशजैः भूपतिभिर्भरतादिभिश्चिरमखण्डमविच्छिन्नन्धृता मही त्वयामदं च्योततीति मदच्युत् क्विप् तेन मदस्राविणा मतङ्गजेन स्रगिवात्महस्तेन स्वकरेण स्वपाणिनेत्यर्थः अपवर्ज्जिता परिहृता त्यक्ता। स्वदोषादेवायमनर्थागम इत्यर्थः ॥ २९ ॥

स्वदोषादेवायमनर्थागम इत्युक्तं स च दोषः कुटिलेष्वकौटिल्यमेवेत्याह। व्रजन्तीति। मूढ़धियो निर्व्विवेकबुद्धयस्ते पराभवं व्रजन्ति। ये मायाविषु मायावत्सु विषये। अस्मायामेधेत्यादिना विनिप्रत्ययः। मायिनो मायावन्तः। व्रीह्यादित्वादिनिप्रत्ययः। न भवन्ति। अत्रैवार्थान्तरं न्यस्यति। प्रविश्येति। शठाः अपकारिणो

गुणानुरक्तामनुरक्तसाधनः
कुलाभिमानी कुलजान्नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्
मनोरमामात्मवधूमिव श्रियम् ॥३१॥
भवन्तमेतर्हि मनस्विगर्हिते
विवर्त्तमानन्नरदेव वर्त्मनि ।

धूर्त्तास्तथाविधानकुटिलानसंवृताङ्गान् अवर्म्मितशरीरान्निशिता इषवइव प्रविश्य प्रवेशं कृत्वा आत्मीयाभूत्वा घ्नन्ति हि । आर्ज्जवं हि कुटिलेषु न नीतिरिति भावः ॥ ३० ॥

न च लक्ष्मीचाञ्चल्यादयमनर्थागमः किन्तु स्वोपेक्षादोषमूलत्वादित्याशयेनाह । गुणेति । अनुरक्तसाधनोऽनुकूलसहायवान् । उक्तञ्च कामन्दकीये । उद्योगादनिवृत्तस्य सुसहायस्य धीमतः । छायेवानुगता तस्य नित्यं श्रीः सहचारिणीति ॥ कुलाभिमानी क्षत्रियत्वाभिमानी कुलीनत्वाभिमानी च त्वदन्यस्त्वत्तोऽन्यः । अन्यारादित्यादिना पञ्चमी । क इव नराधिपो गुणैः सन्ध्यादिभिः सौन्दर्य्यादिभिश्चानुरक्तामनुरागिणीं कुलजां कुलक्रमादागतां कुलीनाञ्च मनोरमां श्रियमात्मवधूमिव स्वभार्य्यामिव । वधूर्ज्जाया स्नुषा चेत्यमरः । परैः शत्रुभिरन्यैश्चापहारयेत्स्वयमेवापहारं कारयेदित्यर्थः । कलत्रापहारवल्लक्ष्म्यपहारोऽपि राज्ञा मानहानिकरत्वादनुपेक्षणीयइति भावः ॥ ३१ ॥

कथन्न मन्युर्ज्ज्वलयत्युदीरितः
शमीतरुं शुष्कमिवाग्निरुच्छिखः॥ ३२॥
अवन्ध्यकोपस्य विहन्तुरापदा
म्भवन्ति वश्याः स्वयमेव देहिनः।

अथ दशभिः कोपोद्दीपनङ्करोति। भवन्तमिति। हे नरदेव नरेन्द्र। एतर्हि इदानीमस्मिन्नापत्कालेऽपीत्यर्थः। एतर्हि सम्प्रतीदानीमधुना साम्प्रतन्तथेत्यमरः। इदमो-र्हिलिति र्हिल्प्रत्ययः। एतेतौरथोरित्येतादेशः। आ-पदमेवाह। मनस्विगर्हिते सूरजुगुप्सिते वर्त्मनि मार्गे वर्त्तमानं शत्रुकृतान्दुर्दशामनुभवन्तमित्यर्थः। भवन्त-न्त्वामुदीरितउद्दीपितोमन्युःक्रोधः शुष्कन्नीरसम्। शुषः कइति निष्ठातकारस्य ककारः। शमी चासौ तरुश्चेति विशेषण समासः तं शमीग्रहणं शीघ्रज्वलनस्वभावात् कृतम् उच्छिखउद्गतज्वालः। शिखिज्वाले अपि शिखे इत्य-मरः। वह्निरिव कथन्नज्वलयति ज्वलयितुमुचितमि-त्यर्थः। मितां ह्रस्वइति ह्रस्वः॥ ३२॥

नन्वन्तःशत्रुत्वादयं क्रोधः त्याज्यएवेत्याशङ्क्याह। अवन्ध्येति। अवन्ध्यः कोपोयस्य तस्य अवन्ध्यकोपस्य अतएवापदां विहन्तुर्निग्रहानुग्रहसमर्थस्येत्यर्थः पुंसइति शेषः। देहिनोजन्तवः स्वयमेव वश्यावशङ्गताभवन्ति। वशङ्गतइति यत्प्रत्ययः। अतस्त्वया कोपिना भवितव्य-मित्यर्थः। व्यतिरेके त्वनिष्टमाचष्टे अमर्षशून्येन निः-

अमर्षशून्येन जनस्य जन्तुना
न जातहार्द्देन न विद्विषादरः ॥३३॥
परिभ्रमल्लोहितचन्दनोचितः
पदातिरन्तर्गिरि रेणुरूषितः ।

कोपेन जन्तुना । कन्यया शोकद्रुतिवत् हेताविति तृतीया । हृदयस्य कर्म्म हार्द्दं स्नेहः । प्रेमा ना प्रियता हार्द्दं प्रेम स्नेहइत्यमरः । युवादित्वादण् । हृदयस्य हृल्लेखपदण्लेष्विति हृदादेशः । जातहार्द्देन जातस्नेहेन सता जनस्यादरोन विद्विषा द्विषता च सतादरोन । अमर्षहीनस्य रागद्वेषावकिञ्चित्करत्वादगण्याविल्यर्थः । अथवा विद्विषा सतादरोभयन्न । दरोऽस्त्रियाम्भये श्वभ्रइत्यमरः । एतस्मिन्नेव प्रयोगे सन्धिवशात् द्विधा पदच्छेदः पुंवाक्येषु न दोषः । अतः स्थाने कोपः कार्य्यस्त्याज्यस्त्वस्थाने कोप इति भावः ॥ ३३ ॥

परिभ्रमन्निति । लोहितचन्दनोचितः उचितलोहितचन्दनः वाहिताग्न्यादिष्विति साधुः । अभ्यस्तरक्तचन्दनइत्यर्थः । अभ्यस्तेत्युचितं न्याय्यमिति यादवः । महारथोरथचारी । उभयत्रापि प्रागिति शेषः । अद्य तु रेणुरूषितोधूलिच्छुरितः पद्भ्यामतति गच्छतीति पदातिः पादचारी । अज्यतिभ्यां चेत्यनुवृत्तौ पादेचेत्यौणादिकइन् प्रत्ययः । पादस्य पदाज्याजातिगोपहतेष्विति पदादेशः । अन्तर्गिरि गिरीष्वन्तः । विभक्त्यर्थेऽव्ययी-

महारथः सत्यधनस्य मानस
न्दुनोति नो कच्चिदयं वृकोदरः ॥३४॥
विजित्य यः प्राज्यमयच्छदुत्तरा-
न्कुरूनकुप्यं वसु वासवोपमः।
स वल्कवासांसि तवाधुना हरन्
करोति मन्युन्न कथन्धनञ्जयः ॥२५॥

भावः। गिरेश्चेत्येकस्येति विकल्पात्समासान्ताभावः। परिभ्रमन्नयं वृकोदरभीमः सत्यधनस्येति सोल्लुण्ठवचने। अद्यापि त्वया सत्यमेव रक्ष्यते न तु भ्रातरइति भावः। तवेति शेषः। मानसं नो दुनोति। स्वान्तं हृन्मानसं मनइत्यमरः। कच्चिन्न परितापयति। कच्चित्कामप्रवेदन-इत्यमरः। स्वाभिप्रायाविष्करणं कामप्रवेदनम् ॥ ३४ ॥

विजित्येति। वासवइन्द्रउपमानं यस्य वासवोपम-इन्द्रतुल्योयो धनञ्जयः उत्तरान्कुरून्मेरोरुत्तरान्मानुषा-न्देशविशेषान् विजित्य प्राज्यं प्रभूतम्। प्रभूतम्प्रचुरं प्राज्यमित्यमरः। कुप्यादन्यदकुप्यं हेमरूप्यात्मकम्। स्यात् कोशश्च हिरण्यञ्च हेमरूप्ये कृताकृते। ताभ्यां यदन्य-त्तत्कुप्यमित्यमरः। वसु धनमयच्छद्दत्तवान्। पाघ्रे-त्यादिना दाणोयच्छादेशः। स धनञ्जयतीति धनञ्जयो-ऽर्जुनः। संज्ञायां भृतॄवृजीत्यादिना खच् प्रत्ययः। अरुर्द्विषदित्यादिनानुमागमः। अधुनास्मिन् काले। अधु-

वनान्तशय्याकठिनीकृताकृती
कचाचितौ विष्वगिवागजौ गजौ ।
कथन्त्वमेतौ धृतिसंयमौ यमौ
विलोकयन्नुत्सहसे न बाधितुम् ॥३६॥
इमामहं वेद न तावकीन्धियं
विचित्ररूपाः खलु चित्तवृत्तयः ।

नेति निपातनात्साधुः । तव वल्कवासांस्याहरन् कथन्त्व मन्युं क्रोधन्दुःखं वा न करोति ॥ ३५ ॥

वनान्तेति । वनान्तोवनभूमिरेव शय्या तया कठिनीकृताकृती कठिनीकृतदेहौ । आकारोदेहआकृतिरिति वैजयन्ती । विष्वक् समन्तात् । समन्ततस्तु परितः सर्वतोविष्वगित्यपीत्यमरः । कचाचितौ कचव्याप्तौ विशीर्णकेशावित्यर्थः । अतएवागजौ गिरिसम्भवौ गजाविव स्थितौ । एतौ यमौ युग्मजातौ माद्रीपुत्रावित्यर्थः यमोदण्डधरे ध्वांक्षे संयमे यमजेऽपि चेति विश्वः विलोकयंस्त्वङ्कथं धृतिसंयमौ सन्तोषनियमौ । धृतिर्योगान्तरे धैर्य्ये धारणोद्वारतुष्टिष्विति विश्वः । बाधितुन्नोत्सहसे न प्रवर्त्तसे । शकधृषेत्यादिना तुमुन् । अहो महद्वैर्य्यमितिभावः ॥ ३६ ॥

अथ राज्ञोदुर्द्दशान्दर्शयितुमुपोद्घातमाह । प्रकृतावर्णयितु मर्थान्तरवर्णनमुपोद्घातः । इमामिति । इमवर्त्तमानान्तवेमान्तावकीन्त्वदीयाम् । तस्येदमित्यण्प्र

विचिन्तयन्त्याभवदापदम्परां
रुजन्ति चेतः प्रसभम्ममाधयः॥३७॥
पुराधिरूढः शयनम्महाधनं
विबोध्यसे य स्तुतिगीतिमङ्गलैः।

न्वयः। तवकाममकावेक वचनइति तवकादेशः। धियन्त्वदा-
पद्विषयां चिन्तयन्तिमहं न वेद न वेद्मि। परबुद्धेरप्रत्यक्ष-
त्वादिति भावः। विदोलटोवेति णलादेशः। नचात्म-
दृष्टान्तेनापन्नत्वात् दुःखित्वमनुमातुं शक्यते धीरादिष्व-
नैकान्तिकत्वादित्याशयेनाह। चित्तवृत्तयोविचित्ररूपाः।
धीराधीरात्मनेकप्रकारः खलु किन्तु परामुत्कृष्टान्त्वदा-
पदं विचिन्तयन्त्याभावयन्त्याममचेतश्चित्तम् आधयोमनो-
व्यथाः। उपसर्गे घो किरिति किप्रत्ययः। प्रसभम्प्रसह्य
रुजन्ति भञ्जन्ति। रुजोभङ्गइति धातोर्लट् पश्यतामपि
दुःसहा दुःखजननी त्वद्विपत्तिरनुभवितारन्त्वान्नाविष्करो-
तीति महच्चित्रमित्यर्थः। चेतइति रुजार्थानाम्भाववचना-
नामज्वरइति षष्ठी न भवति तत्र शेषाधिकाराच्छेषत्वस्य
विवक्षितत्वादिति॥ ३७॥

तदापदमेव श्लोकत्रयेणाह। पुरेति। यस्त्वं महा-
धनम्बहुमूल्यं श्रेष्ठम्। महाधनं महामूल्यइति विश्वः।
शयनं शय्यामधिरूढः सन् स्तुतयोगीतयश्च ताएव मङ्ग-
लानि तैः करणभूतैः पुरा विबोध्यसे वैतालिकैरिति शेषः
पूर्व्वम्बोधितइत्यर्थः। पुरिलुङ्चस्मे इति भूतार्थे लट्।

अदभ्रदर्भामधिशय्य संस्थलीं
जहासि निद्रामशिवैश्शिवारुतैः ॥३८॥
पुरोपनीतं नृप रामणीयकं
द्विजातिशेषेण यदेतदन्धसा।
तदद्य ते वन्यफलाशिनः पर-
म्परैति कार्श्यं यशसा समं वपुः ॥३९॥

स त्वमदभ्रदर्भां बहुकुशाम्। अस्त्रीकुशं कुशोदर्भइति अदभ्रबहुलबहुत्वमित्यमरः। स्थलीमकृत्रिमभूमिम्। जनपदेत्यादिनाऽकृतिमार्थे ङीप्। एतेन दुःसहस्पर्शत्वमुक्तम्। अधिशीङ्स्थासां कर्म्मेति कर्म्मत्वम्। अधिशय्य शयित्वा। अयङियक्ङितीत्ययङादेशः। अशिवैरमङ्गलैः शिवारुतैः। क्रोष्टुवासितैः। शिवा हरीतकी क्रोष्टा शमी नद्यामलक्युभे इति वैजयन्ती। निद्राञ्जहासि अद्येति शेषः॥ ३८॥

पुरेति। हे नृप यदेतत्पुरवर्त्ति वपुः पुरा द्विजातिशेषेण द्विजभुक्तावशिष्टेनान्धसान्नेन। भिस्सास्त्री भक्तमन्धोऽन्नमित्यमरः। द्वे जाती येषान्ते द्विजातयः। तदुक्तं जन्मना जायते शूद्रः संस्कारैर्द्विजउच्यतइति। दन्तविप्राण्डजाद्विजाइत्यमरः। रमणी यस्य भावोरमणीयकं मनोहरत्वमुपनीतम्प्रापितम्। नयतेर्द्विकर्म्मकत्वात्प्रधाने कर्म्मणि क्तः। प्रधानकर्म्मण्याख्येये लादीनाङ्द्विकर्म्मणामिति वचनात्। अद्य वन्यफलाशिनस्ते तव तद्वपुर्यशसः

अनारतं यौ मणिपीठशायिना-
वरञ्जयद्राजशिरःस्रजां रजः।
निषीदतस्तौ चरणौ वनेषु ते
मृगद्विजालूनशिखेषु बर्हिषाम्॥ ४०॥
द्विषन्निमित्ता यदियन्दशा ततः
समूलमुन्मूलयतीव मे मनः।

समम्पर मतिभावं कार्श्यम्परैति प्राप्नोति उभयमपि चीयत इत्यर्थः। अत्र सहोक्तिरलङ्कारः। तदुक्तङ्काव्यप्रकाशे। सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकमिति॥ ३९॥

अनारतमिति। अनारतमजस्रं मणिपीठशायिनौ मणिमयपीठस्थितौ यौ चरणौ राजशिरःस्रजान्नमङ्कूपालमौलिस्रजां रजः परागोऽरञ्जयत् तौ ते चरणौ मृगैर्द्विजैश्च तपस्विभिरालूनशिखेषु छिन्नाग्रेषु बर्हिषां कुशानाम्। बर्हिः कुशहुताशयोरिति विश्वः। वनेषु निषीदतस्तिष्ठतः॥ ४०॥

ननु सर्व्वप्राणिसाधारण्यामापदि का परिवेदनेत्यत आह। द्विषदिति। यद्यतः कारणादियन्दशा अवस्था। दशा वर्त्तावस्थायामिति विश्वः। द्विषन्तो निमित्तं यस्याः सा। द्विषोनिमित्तादिति शतृप्रत्ययः। अतो मे मनः समूलन्निःशेषम् उन्मूलयतीवोत्पाटयतीव दैविकी त्वापन्न इ.स्वायेत्याह। परैरिति। परैः शत्रुभिरपर्य्यासिता-

पर्य्यासिता वीर्य्यसम्पद्येषान्तेषां मानिनाम्पराभवो विप-

परैरपर्य्यासितवीर्य्यसम्पदां
पराभवोऽप्युत्सव एव मानिनाम्॥ ४१॥
विहाय शान्तिं नृप धाम तत्पुनः
प्रसीद सन्धेहि वधाय विद्विषाम्।
व्रजन्ति शत्रूनवधूय निःस्पृहाः
शमेन सिद्धिं मुनयो न भूभृतः॥ ४२॥
पुरःसरा धामवतां यशोधनाः
सुदुःसहम्प्राप्य निकारमीदृशम्।

त्युत्सव एवेति। वैधर्म्येणार्थान्तरन्यासः मानहानिर्दुःस्सहा तत्रापदिति भावः॥ ४१॥

विहायेति। हे नृप शान्तिं शमं विहाय सत्यसिद्धान्याम तेजो विद्विषां वधाय पुनः सन्धेहि अङ्गीकुरु प्रसीद। प्रार्थनायां लोट्। ननु शमेन कार्य्यसिद्धौ किं क्रोधेनेत्यत आह। व्रजन्तीति। निःस्पृहाः मुनयः शत्रून् कामादीन्निधूय निर्ज्जित्य शमेन क्रोधवर्ज्जनेन सिद्धिं मोक्षाख्यां व्रजन्ति भूभृतस्तु न। कैवल्यकार्य्यवद्राजकार्य्ये न शान्तिसाध्यमित्यर्थः॥ ४२॥

पुर इति। किञ्च धामवतान्तेजस्विनाम्परापकारासहिष्णूनामित्यर्थः। पुरः सरन्तीति पुरःसराः अग्रेसराः। पुरोऽग्रतोऽग्रेषु सर्त्तेरित्यप्रत्ययः। यशोधनाभवादृशाः सुदुःसहमतिदुःसहमीदृशमुक्तप्रकारन्निकार-
पराभवम्प्राप्य ... धर्म्मोपरोधात् ... सति

भवादृशाश्चेदधिकुर्व्वते रति-
र्न्निराश्रया हन्त हता मनस्विता॥ ४३ ॥
अथ क्षमामेव निरस्तविक्रम-
श्चिराय पर्य्येषि सुखस्य साधनम्।
विहाय लक्ष्मीपतिलक्ष्म कार्म्मुक-
ञ्जटाधरः सन् जुहुधीह पावकम्॥ ४४ ॥

हन्त इति खेदे मनस्विताऽभिमानिता निराश्रया सती हता तेजस्विजनैकशरणत्वात् मनस्वितायाः इत्यर्थः। अतः पराक्रमितव्यमिति भावः। यद्यप्यत्र प्रसहनस्यालङ्कृते-रधिपूर्व्वात्करोतेरर्थेः प्रसहने इत्यात्मनेपदं न भवति प्रसहनम्परिभवइति काशिका तथाप्यस्याः कर्त्रभिप्राय-विवक्षायामेव प्रयोजकत्वात्कर्त्रभिप्राये स्वरितञितइत्या-त्मनेपदम्प्रसिद्धम्॥ ४३ ॥

अथेति। अथ पश्चान्तरे निरस्तविक्रमः सन् चिराय चिरकालेनापि क्षमां शान्तिमेव। क्षितिक्षान्त्यौ क्षमे-त्यमरः। सुखस्य साधनम्पर्य्येषि अवगच्छसि तर्हि लक्ष्मी-पतिलक्ष्म राजचिह्नङ्कार्म्मुकं विहाय। धरतीतिधरः पचाद्यच् जटानान्धरोजटाधरः सन्निहवने पावकञ्जु-हुधि पावके होमं कुर्व्वित्यर्थः। अधिकरणे कर्म्मत्वोप-चारः। विरक्तस्य किन्धनुषेत्यर्थः। हुझल्भ्योहेर्धिः॥४४॥

अथ समयोल्लङ्घनाद्बिभेषि तदपि न किञ्चिदित्याह। नेति। परैः शत्रुभिः निकृतिः शाठ्यं परं मायां ये तु ते

न समयपरिरक्षणं क्षमन्ते
निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा
विदधति सोपधि सन्धिदूषणानि ॥ ४५ ॥
विधिसमयनियोगाद्दीप्तिसंहारजिह्मं
शिथिलवसुमगाधे मग्नमापत्पयोधौ ।

तथोक्तेषु अपकारतत्परेषु सत्सु भूरिधाम्नोमहौजस
प्रतीकारक्षमस्य ते तव समयस्त्रयोदश संवत्सरान् व
वत्स्यामीत्येवंरूपा संवित्। समयाः शपथाचारकाल
सिद्धान्तसंविदइत्यमरः। तस्य परिरक्षणम्प्रतीक्षणं
क्षमं न युक्तम्। युक्ते क्षमं शक्तहिते त्रिष्वित्यमरः। 
यस्माद्विजयार्थिनोविजिगीषवः क्षितीशा अरिषु त्रिष
सोपधि सकपटं तथा। कपटोऽस्त्री व्याजदम्भोपधय
छद्मकैतवेइत्यमरः। सन्धिदूषणानि विदधति। केन
द्व्याजेन दोषमापाद्य सन्धिन्दूषयन्ति विघट्टयन्तीत्यर्थ
शक्तस्य हि विजिगीषोः सर्वथा कार्य्यसाधनं प्रधानम
समयरक्षणादिकमशक्तस्येति भावः। अर्थान्तरन्यासो
ङ्कारः। पुष्पिताग्रावृत्तम् ॥ ४५ ॥

उक्तमर्थमाशीर्व्वादपूर्व्वकमुपसंहरति। विधी
विधिर्दैवम्। विधिर्विधाने दैवे चेत्यमरः। समयः क
स्तयोर्नियोगान्नियमनाद्धेतोस्तयोर्दुरतिक्रमत्वादितिभ
अगाधे दुस्तरे आपत्पयोधिरिवेत्युपमितसमासः। 

रिपुतिमिरमुदस्योदीयमानन्दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥४६॥

कृतमिवेति वक्ष्यमाणानुसारात्तस्मिन्नापत्प्रयलधौ मग्नम्।
सूर्य्योऽपि सायं सागरे मज्जति परेद्युरुन्मज्जतीत्यागमः।
दीप्तिः प्रतापश्चातपश्च तस्याः संहारेण जिह्मप्रसन्नं
शिथिलवसु शिथिलधनमन्यत्र शिथिलरश्मिम्। वसुर्दे-
वेऽग्नौ रश्मौ च वसु तोये धने मणाविति वैजयन्ती।
शिथिलबलमिति पाठे तूभयत्रापि शिथिलशक्तिकमि-
त्यर्थः। रिपुतिमिरमिवेति रिपुतिमिरमुदस्य निरस्यो-
दीयमानमुद्यन्तम्। ईङ्गताविति धातोर्दैवादिकात्कर्त्तरि
शानच्। त्वान्दिनादौ दिनकृतमिव लक्ष्मीः भूयः समभ्येतु
भजतु। आशिषि लिङ्लोटाविति लोट्। चमत्कार-
कारितया मङ्गलाचरणरूपतया च सर्गान्त्यश्लोके लक्ष्मी-
शब्दप्रयोगः॥ यथाह भगवान् भाष्यकारः। मङ्गला-
दीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते
वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्त्यध्येतारश्च प्रवक्ता-
रो भवन्ति। पूर्णोपमेयम्। मालिनीवृत्तम्। सर्गान्त-
त्वाद्वृत्तभेदः। यथाह दण्डी। सर्गैरनतिविस्तीर्णैः श्रा-
व्यवृत्तैः सुसन्धिभिः। सर्वत्र लोकवृत्तान्तैरुपेतं लोक-
रञ्जनमिति॥४६॥

अथ कविः काव्यवर्णनामाख्यानपूर्व्वकं सर्गपरिसमाप्तिं
दर्शयति। इतीति। इतिशब्दः सर्गसमाप्तौ भारविकृता-
वितिनामकथनम्। महाकाव्य इति महत्कर्त्तृ

## इति श्रीभारविकृतौ किरातार्ज्जुनीये महाकाव्य

## प्रथमः सर्गः ॥ १ ॥

लक्ष्मसमाप्तिः सूचिता। किरातार्ज्जुनीयमिति काव्य-
वर्णनीययोः कथनम्। प्रथमः सर्गः समाप्त इति शेषः।
एवमुत्तरत्रापि द्रष्टव्यम्। किरातार्ज्जुनावधिकृत्य कृतोयं
ग्रन्थः किरातार्ज्जुनीयम्। शिशुक्रन्देति द्वन्द्वाच्छप्र-
त्ययः। राघवपाण्डवीयग्रन्थवत्। तथाहि। अर्ज्जुन
एवात्र नायकः किरातस्तु तदुत्कर्षाय प्रतिभटतया
वर्णितः। यथाह दण्डी। वंशवीर्यप्रतापादि वर्णयित्वा
रिपोरपि। यज्जयान्नायकोत्कर्षकृतेऽनुवर्णयन्ति हि
अथायं संग्रहश्लोकः। नेता मध्यमपाण्डवो भगवतीना
रायणांशप्रजस्तस्योत्कर्षकृतेऽनुवर्ण्यचरितो दिव्यः किरा
पुनः। शृङ्गारादिरसोऽयमत्र विजयी वीरप्रधानो र
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फ
लमिति। इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरि
रचितायां किरातार्ज्जुनीयव्याख्यायां घण्टापथसमाख्या
यां प्रथमः सर्गः समाप्तः ॥ १ ॥



## द्वितीयः सर्गः ।

विहितां प्रियया मनःप्रियां
अथ निश्चित्य गिरङ्गरीयसीम् ।
उपपत्तिमदूर्ज्जिताश्रयं
नृपमूचे वचनं वृकोदरः ॥ १ ॥
यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा ।

विहितामिति । अथ वृकोदरभीमः प्रियया द्रौपद्या । प्रियाग्रहणं अस्याहितोपदेशस्तवनार्थम् । विहितामभिहितामित्यर्थः । विपूर्व्वस्य दधातेः क्रियासामान्यवाचिनोयोग्यविशेषपर्य्यवसानात् मनः प्रियामभिमतार्थयोगान्मनोहरां विशेषणद्वयेनापि गिरोग्राह्यत्वमुक्तम् । गिरङ्गरीयसीं सारवत्तरान्निश्चित्य नृपं धर्म्मराजम् उपपत्तिमत् युक्तियुक्तं ऊर्ज्जिताश्रयमुदाहार्यं वचनमूचे उक्तवान् । कर्त्तरि लिट् । ब्रुवोवचिरादेशः । ब्रुवशासीत्यादिना द्विकर्म्मकत्वं अकथितञ्चेति नृपस्य कर्म्मत्वम् ॥ १ ॥

किन्तद्वचनन्तदाह । यदिति । मानिनी क्षत्रियकुलाभिमानवती द्रौपदी स्नेहमयेन स्नेहप्रचुरेण । तत्प्रकृतवचने मयट् । चक्षुषा ज्ञानचक्षुषा । एतेना-

अपि वागधिपस्य दुर्व्वचं
वचनन्तद्विदधीत विस्मयम् ॥ २ ॥
विषमोऽपि विगाह्यते नयः
कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः
सदुपन्यस्यति कृत्यवर्त्म यः ॥ ३ ॥

मत्वमुक्तम् । परितोवीक्ष्य । समन्ताद्विविच्य यद्वचनमवोचत् । ब्रुवोर्व्वचिर्व्वा लुङ् वचोऽमिति उमागमः । वागधिपस्य बृहस्पतेरपि दुर्व्वचं वक्तुमशक्यम् । शेषे षष्ठीयं न कृद्योगलक्षणा । अतोन लोकेत्यादिना षष्ठीनिषेधोनास्ति । तद्वचनं विस्मयं विदधीत । सर्व्वस्यापीतिशेषः । अथवा वागधिपस्यापि विस्मयं विदधीतेति सम्बन्धः । दुर्व्वचं केनापीति शेषः । यत्स्त्रीणामपि शास्त्रं अनुरुणद्धि हितं चानुबध्नाति अतो विस्मयकरं ग्राह्यश्चैतद्वचनमिति तात्पर्य्यार्थः ॥ २ ॥

विस्मयकरत्वहेतुमाह । विषमइति । विषमोऽपि दुर्बोधोऽपि अन्यत्र दुःप्रवेशोऽपि नायनीतिशास्त्रम्पयसामाशयो ह्रदइव कृततीर्थः कृताभ्यासाद्युपायः सन् । तीर्थं शास्त्रेऽध्वरे क्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जलावतारेषु कृत्याद्यष्टादशस्वपीति विश्वः । अन्यत्र कृतजलावतारः सन् । तीर्थं योनौ जलावतारे चेति हलायुधः । विगाह्यते विरच्यते प्रविश्यते च । किन्तु तत्र

परिणामसुखे गरीयसि
व्यथकेऽस्मिन्वचसि क्षतौजसाम्।
अतिवीर्य्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः॥ ४॥

नयेन ताद्दृशः पुरुषो विशेषदुर्लभः यः क्षत्यं सन्धिविग्रहादिकार्य्यं स्थानादिकञ्च तस्य वर्त्म सत्साधु देशकालाद्यविरुद्धं यथार्थमित्यर्थः अन्यत्र च गर्त्तग्राहपाषाणादिरहितम् उपन्यस्यति उदाहरति। उपन्यासस्तु वाङ्मुखम्। उपोद्घात उदाहार इत्यमरः। यथा केचित् कृततीर्थे पयसि गम्भीरेऽपि प्रवेष्टारः सन्ति तीर्थकरस्तु विरलः तद्वन्नीतावपि निगूढमपि तत्त्वं सति वक्तारः बहवः सन्ति वक्ता तु न सुलभः। इयञ्च साधु वक्तीति युज्यते विश्वास इति तात्पर्य्यार्थः॥ ३॥

अथ ग्राह्यत्वे हेतुमाह। परिणामेति। परिणामः फलकालः परिपाकावस्था च तत्र सुखे हिते। शस्तं चाथ त्रिषु द्रव्ये पापम्पुण्यं सुखादि चेति सुखशब्दस्य विशेष्यलिङ्गत्वम्॥ गरीयसि गुर्व्वर्थप्रतिपादकेऽर्थभूयिष्टे श्रेष्ठे च क्षतौजसां उभयत्रापि क्षीणशक्तिनां व्यथके युद्धोपोद्वलकत्वाद्भयङ्करे अन्यत्रादौ सन्तापदिदुःखजनके अल्पीयस्यल्पाक्षरे अल्पमात्रे च। उक्तञ्च। स्वल्पा च मात्रा बहुलोगुणश्चेति। अस्मिन्वचसि द्रौपदीवाक्ये अतिवीर्य्यवत्यत्यन्तसामर्थ्यवति भेषजे औषधे इव। भेषजौ-

इयमिष्टगुणाय रोचतां
रुचिरार्था भवतेऽपि भारती ।
ननु वक्तृविशेषनिस्पृहा
गुणगृह्या वचने विपश्चितः ॥ ५ ॥
चतसृष्वपि ते विवेकिनी
नृप विद्यासु निरूढिमागता ।

पथ्यभैषज्यं इत्यमरः । वङ्करधिकोगुणः आनन्दराज्य-लाभादिरारोग्यबलपोषादिश्च दृश्यते । अतोग्राह्यमस्या-वचनमिति भावः ॥ ४ ॥

सत्यमेवं तथापि मह्यं न रोचते किङ्करोमीत्यत्राह । इयमिति । रुचिरार्था हितार्थसम्पन्नेति रुचिहेतूक्तिः । इयम्भारतीद्रौपदीवाक्यं इष्टगुणाय अभिमतगुणाय गुणग्राहिणे इत्यर्थः भवते तुभ्यम् । रुच्यर्थानाम्प्रीयमाणइति सम्प्रदानत्वाच्चतुर्थी । रोचतां स्वदताम् । विध्यर्थे लोट् । हितवचने बलादपीच्छां कुर्यादौषधवदिति भावः । तथापि स्त्रैणे वचसि का श्रद्धा तत्राह । नन्विति । गुणानां गृह्या गुणगृह्याः गुणपक्षपातिन इत्यर्थः । यदा स्वैरि वाह्यपक्षेषु चेति ग्रहेः क्यप् । विपश्चितो विद्वांसः । विद्वान्विपश्चिद्दोषज्ञ इत्यमरः । वचने विषये वक्तृविशेषे स्त्रीपुंसादिलक्षणे निस्पृहाः नवु निराग्रहाः खलु । बालादपि सुभाषितं ग्राह्यमिति न्यायादिति भावः ॥ ५ ॥

सम्प्रति स्वयमुपालभते । चतसृष्विति । हे नृप चत-

कथमेत्य मतिर्व्विपर्य्ययं
करिणी पङ्कमिवावसीदति ॥ ६ ॥
विधुरं किमतः परम्पर
रवगीताङ्गमिते दशामिमाम्।
अवसीदति यत्सुरैरपि
त्वयि सम्भावितवृत्ति पौरुषम् ॥ ७ ॥

स्वप्यपि विद्यासु आन्वीक्षिक्यादिषु। आन्वीक्षिकी त्रयी-वार्त्ता दण्डनीतिश्च शाश्वती। विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवइति कामन्दकः। निरूढ़िमागता प्रसिद्धिङ्गता अतएव विवेकिनी सदसद्विवेकवती। यथाह मनुः। आन्वीक्षिक्यान्तु विद्यामन्वर्म्माधर्म्मौ त्रयी स्थितौ। अर्थानर्थौ च वार्त्तायान्दण्डनीत्यां नयानया विति। ते मतिः-कथङ्करिणी पङ्कमिव विपर्य्ययं वैपरीत्यं अविवेकरूपमेत्य-अवसीदति नश्यति। तन्न युक्तमिति भावः ॥ ६ ॥

किन्त्विदानीं येनेत्यमुपालभ्यते तत्राह। विधुरमिति। त्वयि परैः शत्रुभिरिमामीदृशीम् अवगीतां गर्हिताम्। अवगीतश्च निर्व्वादे मुहुर्दृष्टे च गर्हिते इति विश्वः। दशां गमिते प्रापिते सति। सुरैरपि सम्भावितवृत्ति बहुमतप्रसारम् अथवा निश्चित सद्भावम्पौरुष-म्पुरुषकारः। युवादित्वादण्प्रत्ययः। अवसीदति नश्यति-इति यत् अतःपरं अतोऽन्यत् अधिकं किं विधुरं किं कष्टन्न किञ्चिदित्यर्थः। ... त्याकष्टविन्नयोरपी-

द्विषतामुदयः सुमेधसा
गुरुरस्वन्ततरः सुमर्षणः।
न महानपि भूतिमिच्छता
फलसम्पत्प्रवणः परिक्षयः॥ ८॥

ति वैजयन्ती। अस्तीति शेष। अस्ति भवतिपरः प्रथमपुरुषेऽप्रयुज्यमानोप्यस्तीति भाष्यकारः। भवतीति लटः पूर्वाचार्य्याणांसंज्ञा। यत् पुरुषाधिकारस्त्वदुर्दशा सा च शत्रुकृता तदुपरि महत्कष्टं तच्च त्वदुपेक्षयेत्युपा लभ्यस इत्यर्थः॥ ७॥

अथोपेक्षाकालत्वादियमुपेक्षेत्याशङ्का नायमुपेक्षाकालइति वक्तृत्वदेव तावत् श्लोकद्वयेन विविनक्ति। द्विषतामिति। भूतिमुदयमिच्छता शोभना मेधा यस्य तेन सुमेधसा सुधिया। नित्यमसिच् प्रजामेधयोरित्य सिच्प्रत्ययः गुर्न्महानपि,अस्वन्ततरः अत्यन्तदुरन्तः क्षयोन्मुखइत्यर्थः- द्विषतामुदयः सुखेन मृष्यत इति सुमर्षणः सुसहः उपेक्ष्य इत्यर्थः। स्वतश्च दुर्म्मर्षणइति भावः। भाषायां शासीत्यादिना खलर्थे युच्। महानपि फल सम्पत्प्रवणः फलसिद्ध्युन्मुखः। प्रतिरन्तरित्यादिना णत्वम्। परिक्षयोन सुमर्षणः नोपेक्ष्य इत्यर्थः। अन्यथा तूपेक्ष्यइति भावः। नह्युदयएव प्रतिकार्य्यः न च क्षयएवोपेक्ष्यः किन्तु स्वन्तोत्वास्वन्तत्वाभ्य उभावपि प्रतिकार्य्यौ उपेक्ष्यौ च भवत इत्यर्थः॥ ८॥

अचिरेण परस्य भूयसीं
विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती
कुरुते तत्प्रतिकारमन्यथा ॥ ९ ॥
अनुपालयतामुदेष्यतीं
प्रभुशक्तिं द्विषतामनीहया ।

अथोभयोरपि मध्ये एकतरस्योदयक्षययोर्गतिमुक्त्वा इदानीं युगपत् परीक्षयागमे गतिमाह । अचिरेणेति । कृतमनेनेति कृती कुशल इत्यर्थः । इष्टादिभ्यश्चेति इनिप्रत्ययः । परस्य शत्रोः क्षययुक्तिं क्षययोगं अचिरेणाशुभाविनीं भूयसीं दुरन्ताञ्च तथा आत्मनः क्षययुक्तिं विपरीताञ्चिरभाविनीम् अल्पीयसीं स्वल्पाञ्च विगणय्य विचार्य्य । ल्यपि लघुपूर्व्वादिति अयादेशः । उपेक्षते अन्यथा उक्तवैपरीत्ये परस्य क्षययुक्तौ अल्पीयस्यां स्वस्य च भूयस्यामित्यर्थः तत्प्रतिकारन्तस्याः क्षययुक्तेः प्रतीकारं अचिरेणाशु कुरुते । एवं सति यदा शत्रोरभ्युदयः स्वस्य चातिपरिक्षयो यथास्माकन्तदा किं वक्तव्यमित्यर्थः । सद्यः प्रतिकारं कुरुते इत्यर्थात्सिद्धमनुसन्धेयम् ॥ ९ ॥

तथाप्युपेक्षायामनिष्टमाचष्टे । अनुपालयतामिति । उदेष्यतीं वर्द्धिष्यमाणां । आच्छीनद्योर्नुमिति विकल्पान्नुमभावः । द्विषताम्प्रभुशक्तिं कोषदण्डजन्तेजः । स प्रभा-

अपयान्त्यचिरान्महीभुजा
जननिर्वादभयादिव श्रियः ॥१०॥
क्षययुक्तमपि स्वभावज
न्दधतन्धाम शिवः समृद्धये ।
प्रणमन्त्यनपायमुत्थित
प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥११॥

वः प्रतापश्च यत्तेजः कोषदण्डजमित्यमरः । अनीहया- त्साहेन अनुपालनतां उपेक्षमाणानां महीभुजां श्रिय- सम्पद्योजननिर्वादभयात् निकृष्टपुरुषानुरागात् लोका- पवादभयादिवेति हेतूत्प्रेक्षा । अचिरादपयान्ति अपस- रन्ति । यथाह कामन्दकः । स्त्रीभिः षण्ड इव श्री भिरल- सः परिभूयत इति अतः पराक्रमितव्यमिति भावः ॥ १० ॥

ननु परिक्षीणः कथमप्रबलेनाभियुज्यते इत्यत्राह । क्ष- येति । क्षययुक्तमपि तथा क्षीणमपि सन्तं स्वभावजं स- हजं शिवं सर्वलोकाह्लादकम् धाम चातन्त्रतः प्रकाशम् दधतं समृद्धये वृद्ध्यै उचितमुद्युक्तं उत्सहमानमिति- यावत् । अन्यत्र उत्थितमुदितं अतएव अनपायमविना- शिनं वृद्धिं गच्छमानमित्यर्थः । नृपम्प्रजाः प्रतिपच्चन्द्रं द्विती- याचन्द्रमिवेत्यर्थः । प्रतिपच्छब्देन द्वितीयागुणम् प्रति- पदि तस्यादृश्यत्वादिति । प्रणमन्ति प्रह्वीभावेन वर्त्तन्त इ- भावः । इन्द्रन्तु नमस्कुर्वन्ति । क्षीणस्याप्युत् साहः क

प्रभवः खलु कोषदण्डयोः
कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां
नियतिं लोक इवानुरुध्यते ॥१२॥

विर्निदानमित्यर्थः । स्थिरं हि क्षतोत्साहो दुर्बलोऽपि समश्नुते इति कामन्दकः ॥ ११ ॥

ननु प्रभुशक्तिशून्यस्योत्साहः कुत्रोपयुज्यत इत्यत्राह । प्रभव इति । कर्म्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विनिपातप्रतीकारः कार्य्यसिद्धिश्चेति पञ्चाङ्गानि । यथाह कामन्दकः । सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते इति पञ्चानामङ्गानां विनिर्णयः । तद्धितार्थेत्यादिना उत्तरपदसमासः । कृतः पञ्चाङ्गविनिर्णयो यस्य येन वा स तथोक्तः नयो नीतिशास्त्रमिति यावत् । कोषोऽर्थराशिः । कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोरित्यमरः । दण्डश्चतुरङ्गसैन्यम् । दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे यमे । यात्रायां सैन्यभेदे इति वैजयन्ती । तयोः कोषदण्डयोः प्रभुशक्तेरित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम् । ऋदोरप् । स नयः नीतिशास्त्रं विधेयपदेषु कार्य्यवस्तुषु । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु इत्यमरः । दक्षतां चिरक्रियत्वं उत्साहमित्यर्थः । लोकः क्षयादिप्रयोजनः नियतिं दैवमिव ।

अभिमानवतो मनस्विनः
प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्त्तनक्षम
न्तमभमालम्बनमात्मपौरुषम् ॥१३॥

नियतिर्नियमे दैवे इति विश्वः । अनुरुध्यते अनुसरति रुधेर्दैवादिकात् कर्त्तरि लट् । मन्त्रस्यापि मूलसुत्साहस्तन्मूलायाः प्रभुशक्तेः मूलमिति किमु वक्तव्यम् । अतः स एवाश्रयणीयः यतोनक्लान्द्रिवं मन्वयतः तस्यापि प्रभोर्निरुत्साहस्य न किञ्चित् सिद्ध्यतीति ॥ १२ ॥

ननु लोकोत्साहस्यासहायस्य कथमर्थसिद्धिरित्यत्राह । अभिमानवतइति । अभिमानवतः मानधनस्य प्रियमिष्टमुच्चैरुन्नतम्पदं स्थानं राज्यादिकमारुरुक्षतः आरोढुमिच्छतः प्राप्तुकामस्य मनस्विनो धीरस्यात्मपौरुषं स्वपुरुषकारएव विनिपातनिवर्त्तनक्षमम् अनर्थप्रतीकारसमर्थं आलम्बनसहकारि तमं इष्टतमम् । यथा कस्यचित् शृङ्गमारोहतः किञ्चित्पतनप्रतिबन्धकानुचरहस्तादिक मालम्बनन्तद्वदिति ध्वनिः । किम्पौरुषादन्यैः सहायैः प्रयोजनमितिभावः ॥ १३ ॥

पौरुषानङ्गीकारे दोषमाह । विपदइति । अविक्रम्यौरुषहीनं विपदोऽभिभवन्ति तिरस्कुर्व्वन्ति । आपदुपेतं विपन्नं आयतिः उत्तरकालः । उत्तरङ्काल आयतिरित्यमरः । रहयति त्यजति । निरायतेरात्मजयसे

विपदोऽभिभवन्त्यविक्रमं
रहयत्यापदुपेतमायतिः।
नियता लघुता निरायते-
रगरीयान्न पदं नृपश्रियः ॥१४॥

तदलम्प्रतिपक्षमुन्नते-
रवलम्ब्य व्यवसायवन्ध्यताम्।
निवसन्ति पराक्रमाश्रया
न विषादेन समं समृद्धयः ॥१५॥

त्यर्थः लघुताऽगौरवं नियता अवश्यम्भाविनी न कश्चिदेन माद्रियतइत्यर्थः। अगरीयान् लघीयान् नृपश्रियः पदं राजलक्ष्म्याः आस्पदं न भवति। यद्वा नयेति पदच्छेदः। तस्मात् पौरुषङ्कर्त्तव्यमेवेत्यर्थः॥ अत्र पूर्व्वपूर्व्वस्याविक्रमत्वादुत्तरोत्तरं विपदादिकम्प्रतिकारणत्वात्कारणमालाख्योऽलङ्कारः। यथा सूत्रम्। पूर्व्वपूर्व्वस्योत्तरोत्तरहेतुत्वे कारणमालेति ॥ १४ ॥

फलितमाह। तदिति। तत्तस्मादुपेक्षायान्दोषसम्भवादित्यर्थः। उन्नतेरभ्युदयस्य प्रतिपक्षमन्तरायं व्यवसायवन्ध्यतां उद्योगशून्यतामवलम्ब्य अलं उद्योगशून्यतावलम्बनेनालमित्यर्थः। अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वेति क्त्वाप्रत्ययः तस्य ल्यबादेशः। तथाहि पराक्रमः आश्रयः कारणं यासान्तास्तथोक्ताः समृद्धयः सम्पदः विषादेन

अथ चेदवधिः प्रतीक्ष्यते
कथमाविष्कृतजिह्मवृत्तिना ।
धृतराष्ट्रसुतेन सुत्यजा-
श्चिरमास्वाद्य नरेन्द्रसम्पदः ॥ १६ ॥
द्विषता विहितं त्वयाथवा
यदि लब्धा पुनरात्मनः पदम् ।

सतं ह्यनुत्साहेन सह न निवसन्ति पौरुषसाध्याः सम्पदो-
नानुत्साहसाध्याः उभयोः सहानवस्थानविरोधादित्यर्थः ।
वैधर्म्येण कार्य्यकारणरूपोऽर्थान्तरन्यासः । १५ ।

ननु समयः प्रतीक्ष्यते किं वेगेनेत्यत्राह । अथेति ।
अथावधिः कालः प्रतीक्ष्यते चेत् । अवधिरवधाने स्यात्
सीम्नि काले बिलेऽपि चेति विश्वः । आविष्कृतजिह्म-
वृत्तिना प्रकटितकपटव्यवहारेण धृतराष्ट्रसुतेन दुर्यो-
धनेन नरेन्द्रसम्पदो राज्यसम्पदः नरेन्द्रेति वा पदच्छेदः
चिरं चतुर्दशवर्षाण्यास्वाद्यानुभूय कथं सुत्यजाः ज्ञात-
स्वादेन तेन पश्चादपि सुखेन युद्धरूपं विना न लभ्यन्त
एवेत्यवधिप्रतीक्षणं व्यर्थमित्यर्थः । १६ ।

अथ यदि दैवात् स्वयमेव दुर्य्योधनः सम्पदो दास्यति
तथापि तत्कथं रोचयेमहीत्याह । द्विषतेति । अथ
द्विषता दुर्य्योधनेन विहितं समर्पितमित्यर्थः आत्म-
पदं राज्यं पुनरपि त्वया लब्धा लप्स्यते यदि । क-
र्म्मणि लुट् । हे जननाथ तवानुजन्मनां अनुज-

जननाथ तवानुजन्मनां
कृतमाविष्कृतपौरुषैर्भुजैः ॥१७॥
मदसिक्तमुखैर्मृगाधिपः
करिभिर्वर्त्तयते स्वयं हतैः।
लघयन् खलु तेजसा जगन्न
महानिच्छति भूतिमन्यतः ॥१८॥

ाविष्कृतपौरुषैः प्रकटितपराक्रमैः भुजैः कृतमलं व्यर्थ-
ति यावत्। अस्मद्भुजैर्न किञ्चित्साध्यमित्यर्थः। राज्य-
ानादानयोः द्वितामेव स्वातन्त्र्ये अस्मद्भुजनैष्फल्यम्।
जयस्य विजितमिति शास्त्रात् चालेनैव राज्यं ग्राह्य-
ति भावः। कृतमिति प्रतिषेधार्थमव्ययञ्चादिषु पठ्यते।
लमिति निवारणनिषेधयोरिति गणव्याख्याने। भुजै-
ति गम्यमानसाधनक्रियापेक्षया करणत्वात् तृतीया।
क्तञ्च न्यासोद्द्योतेन। केवलं श्रूयमाणैव क्रिया निमि-
त्तकारकभावस्यापि तु गम्यमानस्यापीति॥१७॥

ननु साम्नैव कार्य्यसिद्धौ किं चानेन। यथाह मनुः।
साम्ना दानेन भेदेन समस्तैरथवा पृथक्। विजेतुं प्रयते-
ारीन्न युद्धेन कदाचनेति तत्किमाग्रहेणेत्याशङ्कयाह।
देति। मृगाधिपः सिंहो मदसिक्तमुखैः मदवर्षिभि-
त्यर्थः। स्वयं स्वेनैव हतैः करिभिर्वर्त्तयते इति तैः-
ति तैरेव जीवतीत्यर्थः। चौरादिकात् वृत्तेर्लट्।

अभिमानधनस्य गत्वरै-
रसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला
ननु लक्ष्मीः फलमानुषङ्गिकम् ॥१९॥

भौवादिकस्य तु अणावकर्म्मकाच्चित्तवत्कर्तृकादिति प-
स्मैपदनियमादिति । तथाहि तेजसा प्रभावेण । ते-
बले प्रभावे च ज्योतिष्यर्चिषि रेतसीति वैजयन्ती । ज-
लघयन् लघूकुर्व्वन् महान् तेजस्वी अन्यतोऽन्यस्मात्पुरुषा
भूतिं वृद्धिं नेच्छति खलु । नहि तेजस्विनः परायत्तवृत्ति
युक्तम् । मनुवचनन्तु अशूरविषयमिति भावः । विशेषे
वक्ष्यमाणसामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १८ ॥

ननु युद्धात् पाक्षिको लक्ष्मीलाभः उपायान्तरैस्तु
तथेत्याशङ्क्याह । अभिमानेति । अभिमानधनस्य वै-
निर्य्यातनमात्रनिष्ठस्य अतएव गत्वरैः गमनशीलैः अस्थि-
रैः । गत्वरश्चेति क्वरबन्तो निपातः । असुभिः प्रा-
करणैः । पुंसि भूम्न्यसवः प्राणा इत्यमरः । स्थास्नु स्थिरं
ग्लाजिस्थश्च ग्स्नुरिति ग्स्नुप्रत्ययः । यशश्चिचीषतः चे-
तुं संग्रहीतुमिच्छतः । चिनोतेः सनन्तात् शतृप्रत्यय
अचिर अंशवो यस्याः सा अचिरांशुर्विद्युत् तस्याः विला-
स्फुरन्तद्वच्चञ्चला क्षणिका इत्यर्थः । लक्ष्मी सम्पत् अनु-
ङ्गादागतम् आनुषङ्गिकं अन्वाचयशिष्टमल्पमप्रधानम् मानन-
णाय यश एव मुख्यम्फलं अभ्युच्चयस्तु लक्ष्मीरिति मा

ज्वलितन्न हिरण्यरेतस
ञ्चयमास्कन्दति भस्मनाञ्जनः।
अभिभूतिभयादसूनतः
सुखमुज्झन्ति न धाम मानिनः॥२०॥

नामिदमेव स्थावरमित्यर्थः। इच्चास्थिरप्राणत्यागेन स्थिर-यशः स्वीकाराभिधानात् न्यूनाधिकविनिमयाख्यः परिवृ-त्त्यलङ्कारः। उक्तञ्च काव्यप्रकाशे। परिवृत्तिर्विनिमयोयो-ऽर्थानां स्यात् समासमैरिति॥ १९॥

नन्वल्पस्य मानस्य हेतोः कथं प्राणत्यागः शक्यते कर्तुं यतोजीवन्नरोभद्रशतानि पश्येदित्याशङ्क्याह। ज्वलितमिति। जनो भस्मनाञ्चयं पुञ्जमास्कन्दति पादा-दिना आक्रमति। अदाहकत्वादिति भावः। ज्वलितं ज्वलन्तम्। कर्त्तरि क्तः मतिबुद्धीत्यादिनात्र चाकारः वर्त्तमानार्थत्वम्। हिरण्यं रेतो यस्य तं हिरण्यरेतसं अग्निं न आस्कन्दति दाहकत्वादिति भावः। अतोहेतो-र्मानिनः अभिभूतिभयात्प्राणलोभेन तेजस्त्यागे परिभवो-भविष्यतीति भयादसूनेव सुखमक्लिष्टं उज्झन्ति त्यजन्ति धाम तेजस्तु नोज्झन्ति मानहानिकराज्जीवनात् स्वते-जसा मरणमेव वरमित्यर्थः। पूर्ववदर्थान्तर-न्यासः॥ २०॥

अथवा किमत प्रयोजनचिन्तया किन्तु तेजस्विना-मयं स्वभावोयज्जिगीषुत्वमित्याशयेनाह। किमिति।

किमपेक्ष्य फलं पयोधरान्
ध्वनतः प्रार्थयते मृगाधिपः ॥
प्रकृतिः खलु सा महीयसः
सहते नान्यसमुन्नतिं यया ॥ २१ ॥
कुरु तन्मतिमेव विक्रमे
नृप निर्धूय तमः प्रमादजम् ।

मृगाधिपः सिंहः किम्फलम्प्रयोजनमपेक्ष्य ध्वनतो गर्जतः । धरन्तीति धराः पचाद्यच् । पयसां धरास्तान् पयोधरान् मेघान् प्रार्थयते अभियाति । याञ्चायामभियाने च प्रार्थना कथ्यते बुधैरिति केशवः । अथवा प्रार्थयते अवरुणद्धीत्यर्थः अभियाञ्चावरोधयोरित्यभिधानात् तथाहि । महीयसो महत्तरस्य सा प्रकृतिः खलु स्वभावः यया प्रकृत्या अन्यसमुन्नतिम्परवृद्धिन्न सहते । महतः परभञ्जनमेव पुरुषार्थ इत्यर्थः । पूर्ववदलङ्कारः ॥ २१ ॥

उक्तमर्थमाह निगमयति । कुरु तदिति । हे नृप तत्तस्मात् उक्तरीत्या पराक्रमावसरत्वाद्धेतोः । तस्मादतस्ततो हेताविल्यमरः । प्रमादजन्तमो मोहं निर्धूय निरस्य विक्रमे पौरुषे एव मतिं कुरु विक्रममेवाङ्गीकुरु न तु प्रायान्तरमित्यर्थः । न च विक्रमवैफल्यमित्याह । भवमितिविद्विषां विपक्षयस्तदनुत्साहहताः तवानुत्साहेनानारम्भेण हताः प्रतिबद्धाः अन्यथा प्रागेव विपद्येरन्नि-

ध्रुवमेतदवेहि विद्विषा-
न्त्वदनुत्साहहता विपत्तयः ॥ २२ ॥
द्विरदानिव दिग्विभावितां
श्चतुरस्तोयनिधीनिवायतः ।
प्रसहेत रणे तवानुजान्
द्विषतां कः शतमन्युतेजसः ॥ २३ ॥
ज्वलतस्तव जातवेदसः
सततं वैरिकृतस्य चेतसि :

भावः । इत्येतद्ध्रुवं निश्चितं अवेहि विद्धि । ध्रुं नित्ये निश्चिते चेति शाश्वतः ॥ २२ ॥

नच नः पराजयशङ्का कार्य्येत्याह । द्विरदानिति । दिग्विभावितान् दिक्षु प्रसिद्धांस्तान् आयतः आगच्छतः । आङ्पूर्वादिण् धातोः शतृप्रत्ययः । चतुरो द्विरदान्दिङ्-गजानिव तथोक्तविशेषणांश्चतुरस्तोयनिधीनिव रणे दिग्विभावितान् शतमन्युतेजस इन्द्रविक्रमान् चतुरस्तवानुजान् द्विषतां मध्ये कः प्रसहेत सोढुं शक्नुयादित्यर्थः । शकि-लिङ् चेति शक्यर्थे लिङ् । अतो निःशङ्कमारभस्वेति भावः ॥ २३ ॥

आशीर्व्वादव्याजेन फलितमाह । ज्वलतइति । तव चेतसि सततं ज्वलतो वैरिकृतस्य जातवेदसः क्रोधाग्नेः शिवेतरा अशिवा अमङ्गला वैधव्यदुःखजनकत्वादिति

विदधातु शमं शिवेतरा
रिपुनारीनयनाम्बुसन्ततिः ॥ २४ ॥
इति दर्शितविक्रियं सुतं
मरुतः कोपपरीतमानसम्।
उपशान्तयितुं महीपति
र्द्विरदं दुष्टमिवोपचक्रमे ॥ २५ ॥

भाव०। रिपुनारीनयनाम्बुसन्ततिः वैरिवनिताश्रुप्रवाहः शमं विदधातु। वैरिकृतस्य क्रोधस्य वैरिवधमन्तरेण शान्त्यसम्भवादवश्यन्तद्वधस्त्वया कर्त्तव्य इत्यर्थः। क्रोधस्य विषयनिगरणेन विषयिणो जातवेदस एवोपनिबन्धनादतिशयोक्तिरलङ्कारः। तदुक्तम्। विषयस्यानुपादानात् विषय्युपनिबध्यते। यत्र सातिशयोक्तिः स्यात् कवेः प्रौढोक्तिजीवितेति। तत्रापि क्रोधस्य जातवेदसोऽभेदेऽप्यभेदाध्यवसायात् भेदेऽभेदरूपा तत एवाम्बुनिर्व्वाप्यत्वोक्तिर्घटते। तथाच यथाम्बुसेकेनाग्निः सम्यक् शाम्यति तथाश्रुप्रवेन क्रोध इत्यौपम्यं गम्यते॥ २४॥

इतीति। इत्युक्तरीत्या दर्शिता विक्रिया विकारो वा नारम्भात्मको येन तं कोपपरीतमानसं कोपाक्रान्तचित्तम्। इदं विशेषणद्वयं द्विरदेऽपि योज्यम्। मरुतः सुतं भीमं महीपतिर्युधिष्ठिरो दुष्टं द्विरदमिव। एतेन शौर्य्यमेव न बुद्धिरस्तीति गम्यते। उपशान्तयितुं शमयितुमुपचक्रमे प्रवृत्तः प्रोपाभ्यां समर्थाभ्यामित्यात्मनेपदम्।

अपवर्ज्जितविप्लवे शुचौ
हृदयग्राहिणि मङ्गलास्पदे।
विमला तव विस्तरे गिरा
मतिरादर्श इवाभिदृश्यते। २६॥
स्फुटता न पदैरपाकृता
नच न स्वीकृतमर्थगौरवम्।

राज्ञा भाव्युपकारविशेषापेक्षया कथञ्चिदवध्योजनः शनैः शनैः द्विरदवद्वशीकरणीयो नतु त्याज्य इति भावः॥२५॥

प्रथममन्तावत् स्तुत्यादिभिः प्रसादयति। अपवर्ज्जितेति। विप्लवः प्रमाणबाधः अन्यत्र वाह्यमलसङ्क्रमः सोऽपवर्ज्जितो यस्य तस्मिन् न्नपवर्ज्जितविप्लवे। शुचौ शुचिः शब्दसौष्ठं लोहशुद्धिश्च तद्वति। अतएव हृदयग्राहिणि मनोरमे मङ्गलास्पदे एकत्र हितार्थप्रतिपादकत्वादन्यत्र मङ्गलवस्तुत्वाच्च श्रेयस्करे। रोचनञ्चन्दनं हेम मृदङ्गन्दर्पणं मणिम्। गुरुमग्निं तथा सूर्य्यम्प्रातः पश्येत् सदा बुध इति पुराणवचनात्। तव गिरां विस्तरे वाक्यप्रपञ्चे। प्रथमे वा शब्द इति घञ्प्रतिषेधात् ऋदोरविलप्। अतएव विस्तारो विग्रहोव्यासः स तु शब्दस्य विस्तर इत्यमरः। मतिस्त्वद्बुद्धिरादर्शो दर्पण इव। दर्पणे मुकुरादर्शाविल्यमरः। अमला विशदा अभिदृश्यते वाग्वैशद्यादेव मतिवैशद्यमनुमीयते। तत्पर्व्वकत्वात्तस्येत्यर्थः

रचिता पृथगर्थता गिरा
न्नच सामर्थ्यमपोहितं क्वचित् ॥२७॥

अत्र युग्मेनाह। स्फुटतेति। उपपत्तिरिति च। पदैः सुप्तिङन्तशब्दैः स्फुटता विशदार्थता न अपाकृता न त्यक्ता अर्थगौरवं अर्थभूयस्त्वं वा नच न स्वीकृतं स्वीकृतमेवेत्यर्थः। वैशद्यप्रसक्तार्थगौरवाभावनिवर्त्तनार्थं नञ्द्वयं सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधाविति वामनः। गिरा-म्पदानां अवान्तरवाक्यानाञ्च पृथगर्थता भिन्नार्थता अपुनरुक्तार्थतेति यावत्। रचिता कृता। तथा क्वचिदपि सामर्थ्यं गिरां अन्योऽन्यसामर्थ्यं साकाङ्क्षत्वान्नापोहितन्न वर्ज्जितम्। अन्यथा दशदाडिमादिशब्दवदेकवाक्यता न स्यात्। यथाहुः अर्थैकत्वादेकवाक्यं साकाङ्क्षा चेद्विभागे स्यात् इति। ननु अर्थगौरवमित्यत्र कथं षष्ठीसमासः पूरणगुणेत्यादिना प्रतिषेधान्नैष दोषः। ये शुक्लादयः शब्दाः गुणे गुणिनि च वर्त्तन्ते यथा पटस्य शुक्लं शुक्लः पट इति च तेषामेवात्र निषेधात् ये च सदा गुणमात्रवचनाः यथा गौरवम्प्राधान्यं रसो गन्धः स्पर्श इत्येवमादयस्तेषामनिषेधात्। तथा तत्स्थैश्च गुणैः षष्ठी समस्यत इति वचनात् बहुलमभियुक्तप्रयोगदर्शनाच्च बलाकायाः शौक्ल्यमित्यादौ तु भाष्यकारवचनादसमासः। अतएवाह वामनः। प्रतीतिमादिषु गुणवचनसमासाभावो बलो स्यादिति ॥ २७॥

उपपत्तिरुदाहृता बला
दनुमानेन न चागमः क्षतः ।
इदमीदृगनीदृगाशयः
प्रसभं वक्तुमुपक्रमेत कः ॥ २८ ॥
अवितृप्ततया तथापि मे
हृदयन्निर्णयमेव धावति ।

उपपत्तिरिति । किञ्च बलात् स्वबलमाश्रित्य कर्म्मणि ल्यब्लोपे पञ्चमी वक्तव्या । उपपत्तिर्युक्तिरुदाहृता पराक्रमपक्ष एव श्रेयानिति युक्तिरुक्तेत्यर्थः । उचितञ्चैतन्महावीरस्येति भावः । तथा अनुमानेन युक्त्या आगमः शास्त्रं न क्षतो न हतः किन्त्वागमाविरुद्धमेवोक्तम् । अन्यथा तद्विरोधादनुमानस्यैव प्रामाण्यभङ्गप्रसङ्गादिति भावः । ईदृगित्थं चान्वयुक्तमिदं वचनं अविद्यमानः ईदृगाशय इत्थं चान्वयुक्ताभिप्रायो यस्य स अनीदृगाशयः । अभिप्रायश्छन्द आशय इत्यमरः । कः प्रसभं हठात् वक्तुमुपक्रमेत न कोऽपीत्यर्थः । इत्थं वक्तुमुपक्रमितैव नास्ति वक्ता तु दूरापास्त एवेति भावः । केचिदेतत् श्लोकद्वयं निन्दापरत्वेनापि योजयन्ति । तदसत् हितोपदेशमात्रतत्परस्यातिवत्सलस्य राज्ञो मत्सरारोपादिव महावीरे भ्रातरि विधेये सर्व्वानर्थमूलभूतनिन्दातात्पर्य्यकल्पनानौचित्यादिति ॥ २८ ॥

अवसाययितुं क्षमाः सुखं
न विधेयेषु विशेषसम्पदः ॥ २८ ॥
सहसा विदधीत न क्रियां
मविवेकः परमापदाम्पदम् ।

यदि स धूनं तर्हि तथैव क्रियतामित्याशङ्क्याह । अविच्छिन्नतयेति । तथापि त्वया सम्यक् निर्णीतेऽपि मे हृदयमविच्छिन्नतया असन्तुष्टतया अद्यापि संशयगतत्वेनेत्यर्थः । निर्णयमेव धावत्यनुसरति अपेक्षत इति यावत् । अद्यापि निर्णयस्य अनुदयादिति भावः । निर्णयानुदये हेतुमाह । अवेति । विधेयेषु सन्धिविग्रहादिकर्त्तव्यार्थेषु या विशेषसम्पदः अवान्तरभेदानां समृद्धयो बाहुल्यानि ताः सुखमक्लेशेनावसाययितुम्पुरुषान् मत्यानुकूल्येन स्वस्वरूपं स्वयमेव शीघ्रं मत्याययितुमित्यर्थः । स्यतेर्ण्यन्ताद्गिणकर्म्मकर्त्तृकात्तुमुन् शकधृषेत्यादिसूत्रस्यायं विषयः । क्षमन्त इति क्षमाः पचाद्यच् । शक्ता न भवन्ति । क्षमं शक्ते हिते त्रिष्वित्यमरः । विधेयमात्रस्य सुगमत्वेऽपि तद्विशेषाणां सौक्ष्म्यात् बाहुल्याच्च दुर्ज्ञेयत्वादद्यापि निर्णयाकाङ्क्षेति तात्पर्य्यार्थः । अत्र निर्णयधावनं मदुत्तरवाक्यार्थस्य हेतुत्वाभिधानात् वाक्यार्थहेतुकङ्काव्यलिङ्गमलङ्कारः । तदुक्तम् । हेतोर्व्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतमिति । २८ ॥

वस्तुविशेषावधारणमन्तरेणैव मदुक्तिरित्याशङ्क्याह ।

वृणते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव सम्पदः ॥ ३० ॥
अभिवर्षति योऽनुपालयन्
विधिवीजानि विवेकवारिणा ।

सहसेति । क्रियतइति क्रिया कार्य्यं तां सहसा अविमृश्येत्यर्थः । सहसेत्याकस्मिकाविमर्शयोरिति गणव्याख्याने स्वरादिपाठादव्ययम् । न विदधीत न कुर्व्वीत । कुतः अविवेकः अविमृश्यकारित्वं परमत्यन्तमापदाम्पदं स्थानं विपत्तिकारणमित्यर्थः । व्यतिरेकेणोक्तमर्थमन्वयेनाह । वृणतइति । गुणलुब्धा गुणग्टध्ना गुणग्टध्नवइति स्वयंवरणहेतूक्तिः सम्पदः श्रियः विमृश्य करोतीति विमृश्यकारी उपपदमतिङिति समासः । तं स्वयमेव वृणते भजन्ते । वृङ् सम्भक्ताविति धातुः । तस्माद्विमृश्यैव प्रवर्त्तितव्यमित्यर्थः । अत्र सहसा विधाननिषेधलब्धविमृश्यकारित्वरूपकारणस्यापद्रूपव्यतिरेककार्य्येण समर्थनाद्वैधर्म्येणार्थान्तरन्यासः । द्वितीयार्द्धेन च स एव साधर्म्येणेति ज्ञेयम् ॥ ३० ॥

ननु साहसिकस्यापि फलसिद्धिर्दृश्यतएव तत्किं विवेकेनेत्यत्राह । अभीति । यः पुमान् विधीयन्तइति विधेयः कृत्यवस्तूनि वीजानीवेत्युपमितसमासः । शरदं लोकइवेति वाक्यगतोपमानुसारात् । तानि विधिवीजानि विवेकोऽपी विवेकवारि तेन विवेकवारिणा पूर्वानु-

स सदा फलशालिनीं क्रियां
शरदं लोक इवाधितिष्ठति ॥ ३१ ॥
शुचि भूषयति श्रुतं वपुः
प्रशमस्तस्य भवत्यलङ्क्रिया ।

समासः । अनुपालयन् प्रतीक्षमाणः संरक्षन् यः अभिवर्षति क्षिपति स पुमान् फलं साधननिष्पाद्योऽर्थः शस्यञ्च । शस्ये हेतुकृते फलमित्युभयत्राप्यमरः । तच्छालिनीं क्रियां कर्म लोके जनः । लोकस्तु भुवने जन इत्यमरः । शरदमिव सदा नित्यमधितिष्ठति सदा क्रिया फलमाप्नोत्येव न कदाचिद्व्यभिचरतीत्यर्थः । साहसिकस्य काकतालीयन्यायेन फलसिद्धिर्विवेकिनस्तु नियतेतिभावः । अत्र फलशब्देन शस्यहेतुकृतयोरर्थयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्तिस्तदनुगृहीता चोपमेत्यनुसन्धेयम् ॥ ३१ ।

नियता विवेकिनः फलसिद्धिरित्युक्तं सम्प्रति तामेव कच्चर्थं स्तौति । शुचीति । शुचि सम्प्रदायशुद्धं श्रुत शास्त्रश्रवणं कर्तृ वपुर्भूषयति अन्यथा अविद्वान् पुरुषः शोच्यइति भावः । तस्य श्रुतस्य प्रशमः क्रोधोपशान्तिः अलङ्क्रिया भूषणम्भवति अन्यथा श्रुतवैफल्यादिति भावः । पराक्रमः सत्यवसरे शौर्य्यं प्रशमस्याभरणम्भवति । अन्यथा सर्व्वैः परिभूयतइति भावः । स पराक्रमः नयापादिता नीतिसम्पादिता विवेकपूर्व्विकेति यावत् सा चासौ

प्रशमाभरणम्पराक्रमः
स नयापादितसिद्धिभूषणः ॥ ३२ ॥
मतिभेदतमस्तिरोहिते
गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः
कुरुते दीपइवार्थदर्शनम् ॥ ३३ ॥

सिद्धिरेव भूषणं यस्य स तथोक्तः अन्यथा साहसिकस्य
सिद्धेः काकतालीयत्वेन पक्षे पराक्रमवैयर्थ्यादिति भावः ।
वपुषो भूष्यतैवात्र सिद्धेर्भूषणतैव तु । उभयमप्यमानां तु
तत् पूर्व्वोत्तरपक्षयोरिति विवेकः । एवं विशिष्टसिद्धेरन-
न्यभूषितायाएव भूषणत्वोक्त्या सर्व्वाभरणतया स्तुतिर्व्व-
ण्यते । अत्रोत्तरोत्तरस्य पूर्व्वपूर्व्वविशेषणत्वात् एकावल्य
लङ्कारः । तदुक्तम् । यत्र विशेषणभावं पूर्व्वम्पूर्व्वम्प्रति
क्रमेणैव भवति परस्परमेषालङ्कृतिरेकावली कथितेति
॥ ३२ ॥

विमृश्य कुर्य्यादिति स्थितन्तत्र विमर्शोपायः क इत्युक्त
उपायमेवेत्याह । मतीति । मतिभेदः कार्य्यविप्रतिपत्तिः ।
मतिभेदस्तम इवेत्युपमितिसमासः दीपइवेत्युपमानुसारात्
तेन तिरोहिते आकृन्ने अतएव गहने दुरवगाहे कृत्य-
विधौ कार्य्यानुष्ठाने विवेकिनां सुकृतः स्वभ्यस्तः अतएव
परिशुद्धो निश्चितः [illegible]

स्पृहणीयगुणैर्महात्मभि
श्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां
विनिपातोऽपि समः समुन्नतेः ॥३४॥
शिवमौपयिकं गरीयसीं
फलनिष्पत्तिमदूषितायतीम् ।

आगमः शास्त्रम् । आगमः शास्त्रमाम्नातइति विश्वः दीपइवार्थदर्शनं कार्य्यज्ञानं वस्तुप्रतिभानञ्च कुरुते ॥२...

एवं विमृश्य कुर्वतो दैवादर्थनाशोऽपि न कश्चिदपराध इत्याह । स्पृहणीयेति । स्पृहणीयगुणैर्लोकश्लाघ्यगुणैर्महात्मभिः सज्जनैश्चरिते अनुष्ठिते वर्त्मनि मार्गे मनो यच्छतां निदधतां सन्मार्गेण व्यवहरतामित्यर्थः विधिहेतुर्दैवनिमित्तकः । विधिर्विधाने दैवेचेत्यमरः अतएव आगसामपराधानामहेतुर्विनिपातोऽपि दैवि... नर्थोऽपि । विनिपातोऽपपाते स्याद्दैवाद्व्यसनेऽपि चे... विश्वः । समुन्नतेरतिवृद्धेः समस्तुल्यः दैविके पुं... स्यानुपालभ्यत्वादिति भावः । यथाह कामन्दकः । स... सम्यगुपक्रान्तङ्कार्य्यमेति विपर्य्ययम् । पुमांस्तत्रानुपा... म्भ्योदैवान्तरितपौरुषइति ॥ ३४ ॥

सम्प्रति यद्विधेयन्तदाह । शिवमिति । निर्गी... बोधयेत्कर्थो यथा: विजिगीषोः विजिगीषो...

विगणय्य नयन्ति पौरुषं
विजितक्रोधरया जिगीषवः ॥३५॥

अपनेयमुदेतुमिच्छता
तिमिरं रोषमयन्धिया पुरः।
अविभिद्य निशाकृतन्तमः
प्रभया नांशुमताप्युदीयते ॥ ३६ ॥

सक्तोगरीयसीम्प्रभूतां सदूषितायतीं अचलोत्तरकालां
म्युक्तामित्यर्थः। फलनिष्पत्तिम्फलसिद्धिं विगणय्य फल-
वत्त्वं निश्चित्येत्यर्थः। पौरुषं पुरुषकारं शिवमनुकूलं
औपयिकं उपायम्। विनयादित्वात् स्वार्थे ठक्। उपायात्
ह्रस्वत्वञ्च। नयन्ति प्रापयन्ति पौरुषमुपायेन योज-
यन्तीत्यर्थः। नानिश्चितफलं कर्म कुर्वीतेति भावः।
यथाह कामन्दकः। निष्फलं क्लेशबहुलं सन्दिग्धफलमेव
च। न कर्म कुर्यान्मतिमान् सदा वैरानुबन्धि चेति।
नयतिः प्रापणार्थे द्विकर्मकः। अत्र पौरुषस्य कर्तृस्थ-
कर्मत्वेऽप्युपायस्यातथात्वात् क्रोधं विनयतेत्यादिवत्।
र्तृस्थेवाशरीरे कर्मणीत्यात्मनेपदं न भवति ॥ ३५ ॥

यदुक्तं विजितक्रोधरयादिति तदावश्यकमाह। अप-
नेयमिति। उदेतुं अभ्युदेतुं इच्छता पुरुषेण पुरः प्रथमं
पादागतम्। मयड्ति मयट्। तिमिरमज्ञानं धिया
विवेकबुद्ध्या करणेनापनेयं अपनोद्यं तथाहि अंशुमतापि
ना प्रभया तेजसा करणेन निशाकृतन्तमोध्वान्तमवि-

बलवानपि कोपजन्मन-
स्तमसो नाभिभवं रुणद्धि यः ।
क्षयपक्ष इवैन्दवीः कलाः
सकला हन्ति स शक्तिसम्पदः ॥३७॥

भिद्य नोदीयते किन्तु विभिद्यैवेत्यर्थः । सर्व्वस्याप्येव
मुतान्येषामित्यपिशब्दार्थः । दृशोभावे लट् ॥ ३६ ॥

ननु दुर्बलस्यैवमस्तु बलीयसस्तु क्रोधादेव कार्य्य
द्धिरित्यत आह । बलवानिति । बलवान् शूरोऽपि कोपाज्जन्म यस्य तस्य कोपजन्मनः । सप्तम्यौप
व्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः । तमसः
मोहस्य । तद्योगात्कर्त्तरि षष्ठी । अभिभवमाक्रम
न रुणद्धि न निवारयति स नृपः क्षयस्य पक्षः क्षयप
कृष्णपक्षः ऐन्दवीः इन्दुसम्बन्धिनीः कलाइव । कला
षोडशो भाग इत्यमरः । सकलाः समग्राः शक्तिसम्प
प्रभुमन्त्रोत्साहशक्तीः तिस्रोऽपि हन्ति नाशयति । यथा
अङ्गावलिरिव क्रोधान्धस्य लोकोत्तरमपि सामर्थ्यं व्य
र्थमेवेत्यर्थः अत्र कालस्य सर्व्वकारणत्वात् क्षयपक्षस्य का
क्षयकारित्वमस्त्येव तमसस्तु तत्कालविजृम्भणा
व्यपदेशः ॥ ३७ ॥

विमृश्य कुर्व्वतः क्रियाप्रकारमाह । समेति ।
समा नाति मृदुर्नातितिग्मा वृत्तिर्यस्य स समवृत्तिः

समवृत्तिरुपैति मार्दवं
समये यश्च तनोति तिग्मताम्॥
अधितिष्ठति लोकमोजसा
स विवस्वानिव मेदिनीपतिः॥३८॥
क्व चिरायपरिग्रहः श्रियां
क्व च दुष्टेन्द्रियवाजिवश्यता।
शरदभ्रचलाश्चलेन्द्रियै-
रसुरक्षा हि बहुच्छलाः श्रियः॥३९॥

समये सत्यवसरे मार्दवं मृदुवृत्तित्वमुपैति तिग्मतान्ती-क्ष्णवृत्तित्वञ्च तनोति स मेदिनीपतिर्विवस्वानिव ओजसा तेजसा लोकमधितिष्ठति आक्रामति। सूर्य्योऽपि ऋतु-भेदेन समवृत्तिरित्यादि योज्यम्॥ ३८॥

उक्तान्यथाकरणे त्वनिष्टमाह। क्वेति। श्रियां सम्प-दाञ्चिराय बहुकालम्परिग्रहः स्वायत्तीकरणं क्व। इन्द्रि-याणि वाजिन इवेत्युपमितसमासः। दुष्टानां अमार्ग-भाविनां इन्द्रियवाजिनां वश्योवशङ्गतस्तस्य भावस्तत्ता-च। नोभयमेकत्र तिष्ठतीत्यर्थः। कुतः हि यस्मात् शरदभ्रवच्चलाश्चला: किञ्च बहुच्छलाः बह्व्य आ-बहुरन्ध्रा इति यावत्। छलन्तु स्खलिते व्याज इति विश्वः। श्रियोलक्ष्म्यः। चलेन्द्रियैरजितेन्द्रियैः असुर-

किमसामयिकं वितन्वता
मनसः क्षोभमुपात्तरंहसः ।
क्रियते पतिरुच्चकैरपां
भवता धीरतयाऽधरीकृतः ॥ ४० ॥
श्रुतमप्यधिगम्य ये रिपून्
विनयन्ते न शरीरजन्मनः ।

क्षा रक्षितुमशक्याः कथञ्चित्प्राप्ता अपि श्रियोनाविनीते
तिष्ठन्तीत्यर्थः । वाक्यार्थहेतुकङ्काव्यलिङ्गमलङ्कारः ।३९।

क्रोधस्य दुष्टतामुक्त्वा तस्य त्यागमुपदिशति । किमिति
उपात्तरंहसः प्राप्तत्वरस्य मनसः । समयोऽस्य प्राप्त
सामयिकः । समयस्तदस्य प्राप्तमिति ठञ् । स न भव-
तीत्यसामयिकस्तमप्राप्तकालं क्षोभं वितन्वता भवता धीर-
तया धैर्य्यगुणेन । मनसोनिर्व्विकारत्वन्धैर्य्यं सत्यपि
हेतुष्विति रसिकाः । अधरीकृतः तिरस्कृतः प्रागिति
शेषः । अपाम्पतिः समुद्रः किङ्किमर्थं उच्चकैरधिक
क्रियते । न पराजितं पुनरुच्चकैः कुर्य्यादिति भावः
अत्र वितन्वतेति भीमविशेषणत्वेन पदार्थस्तोत्तै:कार
हेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ ४० ॥

श्रुतमिति । किञ्च । ये श्रुतं शास्त्रमधिगम्यापि
शरीरजन्मनः शरीरप्रभवान् रिपून् कामक्रोधलोभ
मोहमात्सर्य्यादीन् विनयन्ते न नियच्छन्ति । कर्तृ
...

जनयन्त्यचिराय सम्पदा
मयशस्ते खलु चापलाश्रयम् ॥४१॥
अतिपातितकालसाधना
स्वशरीरेन्द्रियवर्गतापनी ।
जनवन्न भवन्तमक्षमा
नयसिद्धेरपनेतुमर्हति ॥४२॥
उपकारकमायतेर्भृशं
प्रसवः कर्म्मफलस्य भूरिशः ।

सम्पदां श्रियां चापलाश्रयमस्थैर्य्यनिबन्धनमयशो दुष्कीर्त्तिं जनयन्ति । आश्रयदोषादस्थैर्यं सम्पदां न स्वदोषादित्यर्थः । अजितारिषड्वर्गस्य कुतः सम्पदइति भावः ॥४१॥

तथा क्रोधात्कार्य्यहानिरित्याशयेनाह । अतिपातितेति अतिपातितान्यतिक्रान्तानि कालः समयोऽनन्तरूपः साधनानि सहायादीनि च यया सा तथोक्ता तापयतीति तापनी । कर्त्तरि ल्युट् टित्वात् ङीप् । स्वस्य यच्छरीरमिन्द्रियवर्गश्चतयोस्तापने अक्षमा क्रोधोभवन्तं जनवत् पृथग्जनमिव । तेन तुल्यमिति वतिप्रत्ययः तेनेवार्थोलभ्यते । तद्धितश्चाऽसर्वविभक्तिरित्यव्ययम् । नयसिद्धेर्नयसाध्यफलादपनेतुम्पृथक्कर्तुं नार्हति । अक्षमयक्रोधस्यात्मसन्तापातिरिक्तम्फलन्नास्तीत्यर्थः ॥ ४२ ॥

दुष्टः क्रोधइत्युक्तम् अथ क्षमाया गुणानाह । उपका-

अनपायिनिवर्हणं द्विषां
न तितिक्षासममस्ति साधनम् ॥४३॥

प्रणतिप्रवणान्विहाय नः
सहजस्नेहनिबद्धचेतसः।
प्रणमन्ति सदा सुयोधनं
प्रथमे मानभृतां न वृष्णयः ॥४४॥

स्थिरमिति। आयतेरुत्तरकालस्य भूमानमत्यन्तमुपकारकं स्थिरफलहेतुरित्यर्थः। भूरिणः प्रभूतस्य कर्मफलस्य प्रसूयतेऽनेनेति प्रसवः कारणम्। अपायि न भवतीत्यनपायि स्वयमविनश्यदेव द्विषां निवर्हणं विनाशकं एवङ्गुणकं साधनं तितिक्षासमं क्षमातुल्यं नास्ति। क्षान्तिस्तितिक्षेत्यमरः। तिजनिशाने इति धातोर्गुप्तिज्किद्भ्यः सन्निति क्षमार्थे सन्प्रत्ययः। तितिक्षासममित्यलुप्तोपमेयं समासे श्राथी लुप्तोपमा भूमायत्यनपायिपदैः साधनान्तरवैलक्षण्यात् व्यतिरेकश्च व्यज्यते। भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्य्यये च व्यतिरेकः ॥४३॥

ननु तितिक्षया कालक्षेपे दुर्य्योधनः सर्व्वान् राज्ञो वशीकुर्य्यादित्याह। प्रणतीति। सहजस्नेहेनाकृत्रिमप्रेम्णा निबद्धचेतसोऽस्मान् गाढं लग्नचित्ताः सुयोधने तु न तथेति भावः। किञ्च मानभृतामहङ्कारिणामग्रसरे अग्रेसराः सुयोधनस्यापीति भावः। वृष्णयः यादवाः प्रणतिप्रवणान् प्रणामपरान् सुयोधनस्तु

सुहृदः सहजास्तथेतरे
मतमेषां न विलङ्घयन्ति ये।
विनयादिव यापयन्ति ते
धृतराष्ट्रात्मजमात्मसिद्धये ॥४५॥
अभियोगइवान्महीभुजो
भवता तस्य कुतः कृतावधेः।

तथेति भावः। नोऽस्मान् विहाय सुयोधनं सदा न प्रणमन्ति न नमन्ति नानुसरन्ति किन्तु कार्य्यकाले त्यक्ष्यन्त्येवेत्यर्थः। सति यादवविग्रहे न किञ्चिदस्माकमसाध्यम्भवेदिति भावः। अनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ ४४ ॥

किञ्च कारणान्तरमाह। सुहृदइति। किञ्चैषां वृष्णीनां ये सहजाः सहजाताः सहजाः मातृपितृपक्षा इत्यर्थः। अन्येष्वपि दृश्यतइति डप्रत्ययः। सुहृदो मित्राणि तथा इतरे कृतिनसुहृदस्य मतं वृष्णिवचनं न विलङ्घयन्ति नातिक्रामन्ति। ते द्वयेऽपि नृपाः दुर्य्योधनोपजीविनोऽपीति भावः। आत्मसिद्धये आत्मजीवनार्थं धृतराष्ट्रात्मजं दुर्य्योधनं विनयादानुकूल्यादिव यापयन्ति कालक्षमयन्ति। कार्य्यकाले तु वृष्णिपक्षप्रवेशिन एवेत्यर्थः। यातेर्ण्यन्ताल्लट् अर्त्तिह्रीत्यादिना पुगागमः॥ ४५ ॥

किञ्च नायमभियोगकाल इत्याशयेनाह। अभियोगइति। कृतावधेः परिभावितकालस्य। अवधि-

प्रविघाटयिता समुत्पतन्
हरिदश्वः कमलाकरानिव ॥३६॥
उपजापसहान्विलङ्घयन्
स विधाता नृपतीन्मदोद्धतः।
सहते न जनोऽप्यधः क्रियां
किमु लोकाधिकधाम राजकम् ॥४७॥

त्ववधाने स्यात्क्षीणि काले बिलेऽपि चेति विश्वः। तस्य सुयोधनस्य कर्म्मणि षष्ठी। भवता कृतः अवधिमनपेक्ष्येति शेषः। अभियोगः आक्रोशिभवद्दति यावत्। अभियोगस्तु शपथे स्यादाक्रोशे च पराभवद्दति विश्वः। इमान् पूर्वोक्तान् महीभुजोराज्ञः हरिदश्वः उष्णरश्मिः कमलाकरानिव समुत्पतन्नुद्यन्नेव प्रविघाटयिता भेत्स्यति। घाटयतेर्भावादिकाल्लुट्। चौरादिकस्य तु मितां ह्रस्वद्दति ह्रस्वत्वं स्यात् ॥ ४६ ॥

अथ नये दृष्णिपक्षाश्रितान् प्रत्याह। उपजापेति। मदोद्धतः स दुर्योधनो नृपतीनन्यान् नृपान्विलङ्घयन्मदादवमानयन् सहन्त द्दति सहाः पचाद्यच्। उपजापस्सहान् भेदयोग्यान्। समौ भेदोपजापौ विग्रहकरः। विधाता विधास्यति। विपूर्व्वस्य दधातेर्लुट् अवमानितो जनः सुभेद्यद्दति भावः। नच ते सहिष्णवद्दत्याह जनः प्राकृतोऽपि अधः क्रियामपमानं न सहते लोकाधिकधाम लोकोत्तरप्रतापं राजकं राजसमूहः। गोत्रोक्षो

असमापितकृत्यसम्पदां
हतवेगं विनयेन तावता।
प्रभवन्त्यभिमानशालिनां
मदमुत्तम्भयितुं विभूतयः॥४८॥
मदमानसमुद्धतं नृपं
न वियुङ्क्ते नियमेन मूढता।

त्यादिना वुञ्प्रत्ययः। किमुत खड्गे इति किं वक्तव्यमित्यर्थः। तथा सति कृत्स्नमेव राजमण्डलमस्यानेयावलम्बिष्यते इति भावः॥ ४७॥

ननु सखोनिवेत्यादिवनेचरोक्त्या तस्य मदसम्भावनापि कथमित्यत्राह। असमापितेति। असमापितकृत्यसम्पदामकृतकृत्यानां अभिमानशालिनामहङ्कारिणां विभूतयः सम्पदएव तावता स्वल्पेन विनयेन कार्य्यवशादारोपितेनेति शेषः। हतवेगम्प्रतिबद्धवेगन्तु स्वरूपतोहतं मदमुत्तम्भयितुं वर्द्धयितुम्प्रभवन्ति सर्व्वथा दुर्जनसम्पदो विकारयन्तीति भावः॥ ४८॥

अथ मदस्यानर्थहेतुतां युग्मेनाह। मदेति। अपरागेति च। मदमानाभ्यां दर्पाहङ्काराभ्यां समुद्धतं नृपं मूढता कार्य्यापरिज्ञानं नियमेनावश्यन्न वियुङ्क्ते न विसृजति। अतिमूढोनयान्नीतिमार्गादुदस्यते उत्क्षिप्यते। कर्म्मकर्त्तरि लट्। इयहीनात्मनो लोकोऽप-

अतिमूढ उदस्यते नया-
न्नयहीनादपरज्यते जनः ॥४९॥
अपरागसमीरणेरितः
क्रमशीर्णाकुलमूलसन्ततिः।
सुकरस्तरुवत्सहिष्णुना
रिपुरुन्मूलयितुं महानपि ॥५०॥
अणुरप्युपहन्ति विग्रहः
प्रभुमन्तःप्रकृतिप्रकोपजः।

रज्यतेऽपरक्तो भवति। स्वरितञितेत्यादिना आत्मनेपदम् ॥४९॥

अपरागेति। अपरागोऽप्रीतिर्द्वेष इति यावत्। समीरण इव तेनेरितश्चोदितः अत एव क्रमेण शीर्णा शीर्णीभूता आकुला चला च मूलसन्ततिः प्रकृत्यादिस्वजनवर्गः शिफासङ्घातश्च यस्य स तथोक्तः। मूलं वशीकृते स्वीये शिफान्तरे स्मिकादिष्वपि वैजयन्ती। रिपुर्महानपि तरुवद्वृक्षवद् सहिष्णुना क्षमावता उन्मूलयितुमुद्धर्तुं सुकरः सुसाध्यः सुकरोन्मूलन इत्यर्थः। अत्र महादेः पूर्वपूर्वस्योत्तरोत्तरम्प्रति कारणत्वात् कारणमाला तरुवदित्युपमा चेति द्वयोः संसृष्टिः ॥५०॥

नन्वन्तर्भेदमात्रेण कथं सुसाध्यतेत्याह। अणुरिति। अणुरल्पोऽप्यन्तःप्रकृतिप्रकोपजोऽन्तरङ्गामात्याद्यपरागसमुत्थः। प्रकृतिः पञ्चभूतेषु स्वभावे लकारणे। छन्दः-

अखिलं हि हिनस्ति भूधरं
तरुशाखान्तनिघर्षजोऽनलः ॥६१॥
मतिमान् विनयप्रमाथिनः
समुपेक्षेत समुन्नतिं द्विषः ॥
सुजयः खलु तादृगन्तरे
विपदन्ता ह्यविनीतसम्पदः ॥५२॥
लघुवृत्तितया भिदाकृतं
बहिरन्तश्च नृपस्य मण्डलम्।

कारणगुणेषु जलमालादिकेष्वपीति वैजयन्ती। विग्रहो वैरमसुसुपहन्ति नाशयति। अत्र दृष्टान्तमाह। तरुशाखान्तानां निघर्षाद्घर्षणाज्जातोऽनलोऽग्निः। भूधरं गिरिमखिलं साकल्येन हिनस्ति हि दहतीत्यर्थः। उपमानोपमेययसमानधर्माणां प्रतिबिम्बतया निर्देशेन दृष्टान्तालङ्कार ॥६१॥

तथापि कथं वर्द्धमानं शत्रुमुपेक्षेत इत्याशङ्क्य दुर्विनीतत्वादित्याह। मतिमानिति। मतिमान् प्राज्ञो विनयस्य प्रमथ्नाति त्यजतीति विनयप्रमाथिनो दुर्विनीतस्य द्विषः समुन्नतिं वृद्धिमुपेक्षेत। उपेक्षायाः फलमाह। तादृग्विनीतोऽन्तरे कश्चिद्रन्ध्रे सुजयः सुखेन जेतुं शक्यः। खलु हि यस्मादविनीतसम्पदः विपदन्ताः अनर्थोदर्काः ॥५२॥

कथन्दुर्विनीतस्य शत्रोः सुजयत्वमित्याशङ्क्य भेद

अभिभूय हरत्यनन्तरः
शिथिलं कूलमिवापगारयः ॥ ५३॥
अनुशासतमित्यनाकुलं
नयवर्त्माकुलमर्ज्जुनाग्रजम्।
स्वयमर्थ इवाभिवाञ्छित
स्तमभीयाय पराशरात्मजः ॥ ५४॥
मधुरैरवशानि लम्भय-
न्नपि तिर्य्यञ्चि शमन्निरीक्षितैः।

जर्ज्जरितत्वादित्याह। लघ्विति। लघुवृत्तितया स्वस्य दुर्ब्बलरूपतया वहिर्मित्रादिजनपदेषु अन्तरमात्यादिषु च भिदाभेदङ्गतम्। षिड्भिदादिभ्योऽङित्यङ्प्रत्ययः। नृपस्य मण्डलं राष्ट्रमनन्तरः सन्निहितोजिगीषु रापगारयोनदीवेगः। शिथिलमन्तर्भेदजर्ज्जरं कूलमिवाभिभूयाक्रम्य हरति ॥ ५३॥

अन्विति। इतोत्यं आकुलम् अरिनिकारस्मरणात् क्षुभितमर्ज्जुनाग्रजं भीमसेनन्नयवर्त्म नीतिमार्गमनाकुलमसङ्कीर्णं यथा तथा अनुशासतं उपदिशन्तम्। जक्षित्यादयः षडित्यभ्यस्तान्नुमभावः। तं युधिष्ठिरम्पराशरात्मजोवेदव्यासः। स्वयमभिवाञ्छितोऽर्थ इव साक्षान्मनोरथ इवेत्युत्प्रेक्षा। अभियाय प्राप्तः ॥ ५४॥

अथ युग्मेनाह। मधुरैरिति। मधुरैः शान्तैर्नि-

रराज कीर्णाकपिशांशुजालः
शृङ्गात् सुमेरोरिव तिग्मरश्मिः ॥५७॥
अवहितहृदयो विधाय सोऽर्हा
मृषिवदृषिप्रवरे गुरूपदिष्टाम्।
तदनुमतमलञ्चकार पश्चात्
प्रशम इव श्रुतमासनन्नरेन्द्रः ॥५८॥
व्यक्तोदितस्मितमयूखविभासितोष्ठ
स्तिष्ठन्मुनेरभिमुखं स विकीर्णधाम्नः।

पराद्धात्कृष्टात्। अर्द्धाच्च परावराधमोत्तमपूर्व्वाच्चेति यत्प्रत्ययः। आसनतः सिंहासनादुद्यन्नुत्तिष्ठन् कतएव धूतानि कम्पितान्यरुणानि वल्कलाग्राणि यस्य स तथोक्तः। स नृपः कीर्णं विस्तृतमाकपिशमंशुजालं यस्य स तथोक्तः सुमेरोः शृङ्गादुद्यन् तिग्मरश्मिरिव रराज ॥५७॥

अवहितेति। स नरेन्द्रोऽवहितहृदयोऽप्रमत्तचित्तः सन्। चित्तन्तु चेतोहृदयं स्वान्तं हृन्मानसं मनइत्यमरः। ऋषिप्रवरे मुनिश्रेष्ठे। ऋषिवदृष्यर्हाम्। अर्हत्यर्थे वति प्रत्ययः। गुरूपदिष्टां शास्त्रीयामित्यर्थः। अर्हां पूजाम्। गुरोश्च हलइत्यकारप्रत्ययः। विधाय पश्चादनन्तरं तदनुमतन्तेनानुज्ञातमासनम्। प्रशमः शान्तिः श्रुत शास्त्रश्रवणमिवालञ्चकार। उक्तञ्च पूर्व्वम्। प्रशमस्तस्य भवत्यलङ्क्रियेति। मुन्याज्ञयोपविष्टवानित्यर्थः ॥५८॥

परितः पटु बिभ्रदेनसा-
न्दहनन्धाम विलोकनक्षमम् ॥ ५५ ॥
सहसोपगतः सविस्मय
स्तपसां सूतिरसूतिरापदाम्।
ददृशे जगतीभुजा मुनिः
स वपुष्मानिव पुण्यसञ्चयः ॥ ५६ ॥
अथोच्चकैरासनतः परार्ध्या
दुद्यन् स धूतारुणवल्कलाग्रः।

वीक्षितैरवलोकनैः। नपुंसके भावे क्तः। न विद्यते। वशं आयत्तत्वं येषान्तानि अवशानि प्रतिकूलानि। वश-आयत्ततायाञ्चेति विग्रहः। तिर्य्यञ्चि मृगपक्ष्यादीनि प्रशमं शान्तिं लम्भयन् प्रापयन्। लभेश्चेति नुमागमः। गत्यर्थेत्यादिना द्विकर्म्मकत्वं परितः पटूज्ज्वलं एनसाम्। दह्यतेऽनेनेति दहनं निवर्त्तकं तथापि विलोकनक्षमन्दर्शनीयं वक्रयादिविलक्षणमिति भावः। धाम तेजोबिम्बत् ॥ ५५ ॥

सहसेति। पुनः सहसोपगतः अकस्मादागतः तपसां सूतिः प्रसवः आपदां असूतिः अप्रभवः निवर्त्तकइति यावत्। स मुनिर्व्यासः वपुष्मान् देहधारी पुण्यसञ्चयः पुण्यराशिरिवेत्युत्प्रेक्षा जगतीभुजा राज्ञा सविस्मयन्ददृशे दृष्टः ॥ ५६ ॥

अथेति। अथ दर्शनानन्तरम्। उच्चकैरुन्नतात्-

तन्वन्तमिद्धमभितो गुरुमंशुजालं
लक्ष्मीमुवाह सकलस्य शशाङ्कमूर्त्तेः ॥ ५८ ॥
इति श्रीमहोपाध्यायभारविकृतौ किरा-
तार्जुनीये महाकाव्ये द्वितीयः सर्गः ॥ २ ॥

व्यक्तेति । व्यक्तोदितैः स्फुटोद्गतैः स्मितमयूखैर्विभा-
सितावोष्ठौ यस्य स तथोक्तः । विकीर्णधाम्नो विसृततेज-
सो मुनेरभिमुखं तिष्ठन् स नृपः इद्धं समिद्धन्दीप्तमिति याव-
त् । अंशुजालन्तन्वन्तं गुरु गोष्पतिम् । गुरुर्गीष्पतिपि-
त्राद्याविल्यमरः । अभितः परित इत्यादिना यतद्वीि
अभितोऽभिमुखं तिष्ठतः इति शेषः । सकलस्य सम्पूर्णस्य
शशाङ्को मूर्त्तिर्यस्य तस्येन्दोर्लक्ष्मीमुवाह बहति स्म ।
अत्रोपमेयस्य राज्ञः उपमानेन्दुधर्मेण लक्ष्म्याः साक्षात्
सम्बन्धासम्भवात् सदृशीं लक्ष्मीमिवेति प्रतिबिम्बकरणा-
क्षेपाद्सम्भवद्वस्तुसम्बन्धात् पदार्थवृत्तिर्निदर्शनालङ्कारः ।
तदुक्तं प्रतिबिम्बस्य करणं सम्भवति यत्र वस्तुयोगेनागमम
सम्भविता निदर्शनं द्विधाभिमतेति ॥ ५८ ॥

इति श्रीमहोपाध्यायमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां द्वितीयः
सर्गः ॥ २ ॥

---

## तृतीयः सर्गः।

ततः शरच्चन्द्रकराभिरामै-
रुत्सर्पिभिः प्रांशुमिवांशुजालैः।
बिभ्राणमानीलरुचं पिशङ्गी-
र्जटास्तडित्वन्तमिवाम्बुवाहम्॥१॥

अथ त्रिभिर्मुनिं विशिनष्टि। चतुर्भिः कलापकमाह। तदुक्तम्। द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम्। कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतमिति। तत इति। ततः उपदेशानन्तरं शरच्चन्द्रकराभिरामैराह्लादकैरित्यर्थः। उत्सर्पिभिरूर्ध्वं प्रसारिभिः अंशुजालैः प्रभापटलैः प्रांशुमुन्नतमिव स्थितमित्युत्प्रेक्षा। पुनः आनीलरुचं कृष्णवर्णां पिशङ्गीः पिङ्गलवर्णाः। गौरादित्वात् ङीप्। जटाः बिभ्राणं धारयन्तमत एव तडित्वन्तं विद्युद्युक्तमम्बुवाहमिव स्थितमित्युत्प्रेक्षा। धर्मात्मजो युधिष्ठिरः एतादृशं मुनिमाससाद इति चतुर्थश्लोकेनान्वयः॥ १॥

प्रसादलक्ष्मीन्दधतं समग्रां
वपुःप्रकर्षेण जनातिगेन।
प्रसह्य चेतस्सु समासजन्त
मसंस्तुतानामपि भावमार्द्रम् ॥२॥
अनुद्धताकारतया विविक्तां
तन्वन्तमन्तःकरणस्य वृत्तिम्।

प्रसादेति। पुनः समग्रां सम्पूर्णां प्रसादः सौम्यता तस्य लक्ष्मीं सम्पदन्दधतम्। अतएव जनमतिगच्छतीति जनातिगेन लोकातिशायिना। अन्यत्रापि दृश्यत इति डप्रत्ययः। वपुःप्रकर्षेण आकारसम्पदा असंस्तुतानाम-परिचितानामपि व्यासोऽयमित्यजानतामित्यर्थः। संस्तवः स्यात्परिचयइत्यमरः। चेतस्सु चित्तेष्वार्द्रम्भावं स्नेहार्द्र-भावमभिप्रायम्प्रसह्य बलात् समासजन्तं लगयन्तमिति यावत्। दंशसञ्जस्वञ्जां शपीत्युपधालोपः। प्रसन्नाकारेषु सर्व्वोऽपि स्निह्यतीति भावः॥ २॥

अनुद्धतेति। पुनरनुद्धताकारतया शान्ताकारत्वेन लिङ्गेनान्तःकरणस्य वृत्तिं विविक्तांपूतां शान्तामिति यावत्। विविक्तौ पूतविजनावित्यमरः। तन्वन्तम्प्रकट-यन्तमाकृतिरेवास्य चित्तशुद्धिं कथयतीत्यर्थः। पुनः मा-धुर्य्यं निसर्गसौम्यतां विस्रम्भोविश्वासः। समौ विस्रम्भ-विश्वासावित्यमरः। तयोर्व्विशेषमतिशयम्भजतीति तयो-

माधुर्य्यविस्रम्भविशेषभाजा
कृतोपसम्भाषमिवेक्षितेन ॥३॥
धर्म्मात्मजो धर्म्मनिबन्धिनीना-
मसूतिमेनःप्रणुदां श्रुतीनाम् ।
हेतुन्तदभ्यागमने परीप्सुः
सुखोपविष्टं मुनिमावभाषे ॥४॥

चतुर्भिः कलापकम् ।

कृतेक्षितेन दर्शनेनैव कृता उपसम्भाषा सम्भाषणं येन तमित्युत्प्रेक्षा दृष्टिविशेषेणैवोपसम्भाषणमिव स्मितमित्यर्थः । काशिकायां तूपसम्भाषा उपसान्त्वनमिति भासनादिसूत्रे ॥ ३ ॥

धर्म्मेति । पुनः धर्म्मं निबध्नन्तीति धर्म्मनिबन्धिनीनामग्निहोत्रादिधर्म्मप्रतिपादिकानां एनःप्रणुदामघच्छिदां क्विप् । श्रुतीनां वेदानाम् । श्रुतिः स्त्री वेद आम्नाय इत्यमरः । प्रसूतिम्प्रभवं सुखेनोपविष्टं मुनिन्तदभ्यागमने तस्य मुनेरागमने हेतुङ्कारणम्परीप्सुर्जिज्ञासुः । आप्नोतेः सन्नन्तादुप्रत्ययः । आप्ज्ञप्यधामीदितीकारः अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः । आवभाषे उवाच ॥ ४ ॥

अनाप्तेति । अनाप्तपुण्योपचयैरकृतपुण्यसङ्ग्रहैर्दुरापा दुर्लभा फलस्य सवित्री श्रेयस्करीत्यर्थः । निर्धूतरजाः हतरजोगुणा । एकत्र रजो धूलिरन्यत्र गुणः । रजो-

अनाप्तपुण्योपचयैर्दुरापा
फलस्य निर्द्धूतरजाः सवित्री ।
तुल्या भवद्दर्शनसम्पदेषा
वृष्टेर्दिवो वीतबलाहकायाः ॥५॥
अद्य क्रियाः कामदुघाः क्रतूनां
सत्याशिषः सम्प्रति भूमिदेवाः ।

रजः सुखे धूलौ परागार्त्तवयोरपीति विश्वः । एषा भवद्दर्शनसम्पत्सम्पत्तिर्लाभ इति यावत् । सम्पदादिभ्यः क्विपो भावार्थत्वात् । वीतबलाहकाया गतमेघाया दिवः आकाशस्य सम्बन्धिन्याः वृष्टेस्तुल्येत्युपमालङ्कारः । अनभ्रवृष्टिवदतर्कितोपपन्नम्भवद्दर्शनं सर्व्वथा कस्यचिच्छ्रेयसो निदानमित्यर्थः । वारि वहतीति बलाहकः । पृषोदरादित्वात् साधुः ॥५॥

अद्येति । अद्य क्रतूनां क्रियाः अनुष्ठानानि कामान् दुहन्तीति कामदुघाः फलदा इत्यर्थः । दुहेः कपघश्चेति कप् प्रत्ययः घादेशश्च । सम्प्रत्यद्य भूमिदेवा ब्राह्मणाः । द्विजात्यग्रजन्मभूदेवबाडवाः विप्रश्च ब्राह्मण इत्यमरः । सत्याशिषो जाताः ब्राह्मणाशिषोऽद्य फलिता इत्यर्थः । नैतद्यतः कारणात् त्वय्यागते सति त्वदागमनेन निमित्तवत्यर्थः । अस्मि अहमित्यर्थेऽव्ययम् । अस्मीत्यस्मदर्थानुवादेऽहमर्थेऽपीति गणव्याख्याने । दाये स्वतागमि भव-

आसंसृतेरस्मिञ्जगत्सु जात
स्त्वय्यागते यद्बहुमानपात्रम् ॥६॥
श्रियं विकर्षत्यपहन्त्यघानि
श्रेयः परिस्तौति तनोति कीर्त्तिम्।
सन्दर्शनं लोकगुरोरमोघ
न्तवात्मयोनेरिव किन्न धत्ते ॥७॥

त्युचितः प्रभूणाम्पादप्रहारइति सुन्दरि नास्मि दूये इति प्रयोगात्। आसंसृतेरासंसारात् यावत्संसारमित्यर्थः। दृग्विभावाङ् विकल्पादसमासः। जगत्सु बहुमानपात्रम्बहुयोग्यताभाजनञ्जातः। सकलसत्कर्मफलभूतन्त्वदागमनं येन मे जगन्मान्यतेति भावः॥ ६॥

श्रियमिति। आत्मयोनेर्ब्रह्मणइव लोकगुरोस्तव अमोघ मविफलं सन्दर्शनं श्रियं विकर्षति आकृष्य ददाति। अघानि दुःखान्यपहन्ति। अंहो दुःखव्यसनेष्वघमित्यमरः। श्रेयः पुरुषार्थम्परिस्तौति स्रवति धातूनामनेकार्थत्वात् परिस्रौतीति पाठेऽपि सएवार्थः। कीर्त्तिन्तनोति। किं बहुनां किन्न धत्ते किञ्चिं न करोति सर्व्वङ्करोतीत्यर्थः॥ ७॥

श्वेरातदिति। हे भगवन् श्वेरातन्मयूखे। सुधासाविकरे हिमद्युताविन्दावपि विषये न निर्वृतम्। नञ-र्थस्य नञ्शब्दस्य सुप्सुपेति समासः नै चक्षुस्त्वत्सन्निधौ

श्रेयातन्मयूखेऽपि हिमद्युतौ मे
न निर्वृतं निर्वृतिमेति चक्षुः।
समुज्झितज्ञातिवियोगखेद
न्त्वत्सन्निधावुच्छ्वसतीव चेतः॥८॥

निरास्पदम्प्रश्नकुतूहलित्व
मस्मास्वधीनङ्किमु निःस्पृहाणाम्।
तथापि कल्याणकरीङ्गिरन्ते
मां श्रोतुमिच्छा मुखरीकरोति॥९॥

निर्वृतिं सुखमेति। तथा चेतश्च समुज्झितज्ञातिवियोगखेदन्त्यक्तबन्धुविरहदुःखं समुच्छ्वसतीव अनुरोधेन प्राणितीवेत्युत्प्रेक्षा। पूर्व्वार्द्धे तु निर्वृतिकारणे सत्यपि दुन्द्वावनिर्वृतिकथनाद्विशेषोक्तिः। तदुक्तम्। तत्सामग्र्यामनिर्वृतिर्विशेषोक्तिर्निगद्यतइति॥८।

निरास्पदमिति। प्रश्नकुतूहलित्वं निरास्पदं आगमनप्रयोजनप्रश्नोनिरास्पदइत्यर्थः। आस्पदं प्रतिष्ठायामिति निपातः। प्रश्नानवकाशे हेतुमाह। निःस्पृहाणां युष्मत्सदृशामित्यर्थः। अस्मास्वधीनमायत्तङ्किमु न किञ्चिदस्मत्तोलभ्यमित्यर्थः। आधारत्वविवक्षायां सप्तमी। तथापि कल्याणकरीमस्मद्धितैकहेतुमित्यर्थः। निस्पृहत्वेः पारार्थ्यादिति भावः। कृञोहेत्विति टप्रत्यये ङीप्। अतस्ते गिरं श्रोतुमिच्छा मां मुखं वागस्यास्तीति

इत्युक्तवानुक्तिविशेषरम्यं
मनः समाधाय जयोपपत्तौ ।
उदारचेता गिरमित्युदारां
द्वैपायनेनाभिदधे नरेन्द्रः ॥ १० ॥

चिचीषतां जन्मवतामलघ्वीं
यशोवतंसामुभयत्र भूतिम् ।

मुखरो निरन्तरभाषी । मुखकुञ्जेभ्यो रो वक्तव्य इति रः । दुर्मुखे मुखराबद्धमुखावित्यमरः । ततः च्विप्रत्ययः मुखरीकरोति । व्यापारयतीत्यर्थः । निःस्पृहस्यापि ते वाक्यमस्मद्धितकरत्वाच्छ्रोतव्यमिति भावः ॥ ९ ॥

इतीति । इतीत्यमुक्तिविशेषरम्यमुक्तिवैचित्र्यचारु यथा तथोक्तवान् । उदारचेता महामना नरेन्द्रो द्वैपायनेन व्यासेन द्वीपमयनं स्थानं जन्मभूमिर्यस्य स द्वीपायनः स एव द्वैपायनः । प्रज्ञादिभ्यश्चेति स्वार्थेऽण्प्रत्ययः नापत्यार्थे नडादिभ्यः फक् तेष्वेव पाठात् बाधितार्थत्वाच्च । जयोपपत्तौ मनः समाधाय जयसिद्धिमपेक्ष्येत्यर्थः । इति वक्ष्यमाणप्रकारामुदारामर्थवतीं गिरमभिदधे उक्तः । दुहादित्वादप्रधाने कर्मणि लिट् । प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण इति वचनात् ॥ १० ॥

आदौ तावत्तस्य माध्यस्थ्यताभङ्गदोषं युग्मेन परिहरति । चिचीषतामिति । अलघ्वीं गुर्वीम् । वीतो गुण-

अभ्यर्हिता बन्धुषु तुल्यरूपा
वृत्तिर्विशेषेण तपोधनानाम् ॥११॥
तथापि निघ्नं नृप तावकीनैः
प्रह्वीकृतं मे हृदयं गुणौघैः।
वीतस्पृहाणामपि मुक्तिभाजां
भवन्ति भव्येषु हि पक्षपाताः ॥१२॥

युग्मम्।

वचनादिति ङीष्। यशोवतंसाङ्कोर्त्तिभूषणाम् उभयत्र इहचामुत्र च भूतिं श्रेयश्चिचीषतां सञ्चेतुं सङ्ग्रहीतुमिच्छतां चितोतेस्सन्नन्ताच्छत्प्रत्ययः। जन्मवतां शरीरिणां बन्धुषु विषये तुल्यरूपा एकविधा वृत्तिर्व्यवहारोऽभ्यर्हिता उचिता तपोधनानान्त्वस्मत्सदृशां विशेषेण नियमेनाभ्यर्हिता॥ ११॥

तथापीति। तथापि तुल्यवृत्तौ चिन्त्येऽपि हे नृप तावकीनैस्त्वदीयैः। युष्मदस्मदोरन्यतरस्यां खञ् चेति खञ् प्रत्ययः तवकममकावेकवचनइति तवकादेशः। गुणौघैः प्रह्वीकृतमावर्ज्जितं मे हृदयन्निघ्नं त्वदायत्तम्। अधीनोनिघ्न आयत्तइत्यमरः। ननु निस्पृहस्य कोऽयम्पक्षपात इत्यत्राह। वीतेति। वीतस्पृहाणां विरक्तानां मुक्तिभाजां मुमुक्षूणामपीत्यर्थः। भवन्तीति भव्याः साधवः। भव्यगेयेत्यादिना कर्त्तरि निपातः। तेषु पक्षपाताः स्नेहा-

सुता न यूयं किमु तस्य राज्ञः
सुयोधनं वा न गुणैरतीताः ।
यस्त्यक्तवान्वः स वृथा बलाद्वा
मोहं विधत्ते विषयाभिलाषः ॥१३॥

भवन्ति ननु साध्वनुग्रहोऽमहतां साध्यस्यभञ्जक इति भावः ॥ १२ ॥

अथ नृपस्य गुणवत्तां प्रकटयितुं धृतराष्ट्रस्य दुश्चेष्टमुद्घाटयति । सुताइति । यूयन्तस्य राज्ञोधृतराष्ट्रस्य सुता न किमु अपि तु सुताएवेत्यर्थः । गुणैः शान्तिदानदाक्षिण्यादिभिः सुयोधनं नातीता नातिक्रान्ता वा अतीताएवेत्यर्थः । कर्त्तरि क्तः । असुतत्वमगुणत्वञ्च त्यागे हेतुः युष्मासु तन्नास्तीत्यर्थः । उपालम्भे कारणमाह । य इति । यः धृतराष्ट्रोवोयुष्मान्वृथा निष्कारणमेव त्यक्तवान् यदि वयं सुताः गुणाधिकाश्च तर्हि कथमत्याक्षीत्तत्राह बलादिति । स विषयाभिलाषोभोगतृष्णा बलाद्बलात्कारादिव । वा स्याद्विकल्पोपमयोरेवार्थेऽपि समुच्चये इति विश्वः । मोहमविवेकं विधत्ते विषयाभिलाषातिरिक्तोन कश्चिद्गुणत्यागहेतुरस्तीत्यर्थः । अत्र कार्य्यकारणसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

अथ राज्ञ उत्साहवर्द्धनाय शत्रोर्हानिं सूचयति । जह्यात्विति । एनं धृतराष्ट्रमर्थसिद्धिः कथं न जह्यातु

जहातु नैनं कथमर्थसिद्धिः
संशय्य कर्णादिषु तिष्ठते यः।
असाधुयोगा हि जयान्तरायाः
प्रमाथिनीनां विपदां पदानि ॥१४॥

पथश्च्युतायां समितौ रिपूणां
धर्म्यं दधानेन धुरं चिराय।

जहात्वित्यर्थः। प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चेति प्राप्त-काले लोट्। तस्य हानिकालः प्राप्त इत्यर्थः। कुतः यो धृतराष्ट्रः संशय्य सन्दिह्य कर्णादिषु तिष्ठते कर्णादीन्दु-ष्मन्त्रिणः सन्दिग्धार्थे निर्णेतृत्वेनावलम्बत इत्यर्थः। प्रका-शनस्थेयाख्ययोश्चेति स्थेयाख्यायामात्मनेपदं प्रकाशस्थे-याख्ययोश्चेति तङ् तिष्ठतेऽस्मिन्निति स्थेयो विवादपद-निर्णेता। तथा हि असाधुयोगा दुर्जनसंसर्गा जयान्तरायाः जयविघातकाः। किञ्च प्रमाथिनीनामुन्मूलनशीलानां विपदाम्पदानि स्थानानि। पदं व्यवसितत्राणस्थान लक्ष्माङ्घ्रिवस्तुष्वित्यमरः। न केवलं जयघातिनः किन्त्वनर्थ-कारिणश्चेत्यर्थः। धृतराष्ट्रोऽपि दुर्जनविधेयत्वाद्विनङ्क्ष्य-तीति भावः॥१४॥

एवं शत्रोरनर्थं सूचयित्वा राज्ञोऽर्थसिद्धिं सूचयति। पथ इति। रिपूणां समितौ सभायाम्। सभासमिति संसदित्यमरः। पथश्च्युतायां मार्गभ्रष्टायां दुरात्मनो

त्वया विपत्स्वप्यविपत्तिरम्य
माविष्कृतम्प्रेम परं गुणेषु ॥१५॥

विधाय विध्वंसमनात्मनीनं
शमैकवृत्तेर्भवतश्छलेन ।
प्रकाशितत्वन्मतिशीलसाराः
कृतोपकारा इव विद्विषस्ते ॥१६॥

दुःशासनस्य स्त्रीग्रहणसाहसमङ्गीकृतवत्यामित्यर्थः। चिराय धर्म्यां धर्म्मादनपेताम् । धर्म्मपथ्यर्थन्यायादनपेत इति यत्प्रत्ययः। धुरम्भारन्दधानेन कृच्छ्रेष्वपि धर्म्मादचलतेत्यर्थः। त्वया विपत्स्वपि अविपत्ति अविनाशि अत एव रम्यं गुणेषु शान्त्यादिषु विषये परमुत्कृष्टम्प्रेमाविष्कृतं प्रकटीकृतं दुःसहमपि सोढ़वता त्वया साधु कृतमिति भावः॥ १५ ॥

विधायेति। किञ्च शमएव एका मुख्या वृत्तिर्यस्य तस्य अपरोपतापिन इत्यर्थः। भवतः छलेनकपटेन आत्मने हित आत्मनीनः स न भवतीत्यनात्मनीनः स्वस्यैवानर्थहेतुरित्यर्थः तम् । आत्मविश्वजनभोगोत्तरपदात् ख इति खप्रत्ययः। विध्वंसमपकारं विधाय कृत्वा प्रकाशितः प्रख्यापितस्त्वन्मतिशीलयोस्तव प्रज्ञास्वभावयोः सारः प्रकर्षो यैस्ते तथोक्ताः ते तव विद्विषः कृतोपकारा इवोपकृतवन्त इव जाता इति शेषः अपकारायैव संवृत्ताः यदेषां दौर्जन्यं

लभ्या धरित्री तव विक्रमेण
ज्यायांश्च वीर्य्यास्त्रबलैर्विपक्षः।
अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः॥१७॥
त्रिःसप्तकृत्वो जगतीपतीनां
हन्ता गुरुर्यस्य स जामदग्न्यः।

सुष्ठुत्सौजन्यञ्च जगति सुव्यक्तमासीदित्यर्थः। विद्यमानस्यापि सुजनस्य चन्दनदारुणइव गुणाः परिभवे एव प्रचुरा भवन्तीति भावः॥१६॥

अथ प्रयोजनान्तरमाह। लभ्येति। तव त्वयेत्यर्थः कृत्यानां कर्त्तरि वेति षष्ठी। धरित्री विक्रमेण लभ्या प्राप्या नच सुलभ्या ते विनेत्यर्थः। विपक्षश्च शत्रुरपि वीर्य्यं शौर्य्यं अस्त्राण्याग्नेयादीनि बलानि सैन्यानि तैर्ज्यायान् प्रशस्यतरोऽधिकतरइति यावत्। ज्येष्ठस्य ज्यादादीयसइति ज्यादेशः। अतः प्रकर्षायाधिक्याय विधिरुपायो विधेयः कर्त्तव्यः हि यस्माद्रणे जयश्रीः प्रकर्षतन्त्रा प्रकर्षप्रधाना उत्कर्षायत्तेत्यर्थः। तन्त्रम्प्रधाने सिद्धान्तइत्यमरः। बलिनएव जयोनतु दुर्बलस्येति भावः॥१७॥

अथ त्रिरित्यादिना श्लोकचतुष्टयेन विपक्षज्यायस्त्वं वर्णयति। त्रिःसप्तेति। त्रिरावृत्तान् सप्तवारान् त्रिःसप्तकृत्वः एकविंशतिकृत्वइत्यर्थः। त्रिसप्तशब्दयोः सुप्सु-

वीर्य्यावधूतः स्म तदा विवेद
प्रकर्षमाधारवशङ्गुणानाम् ॥१८॥
यस्मिन्ननैश्वर्य्यकृतव्यलीकः
पराभवम्प्राप्त इवान्तकोऽपि।
धुन्वन्धनुः कस्य रणे न कुर्य्या
न्मनो भयैकप्रवणं स भीष्मः ॥१९॥

पेति समासः सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति कृत्वसुच्प्रत्ययः। जगतीपतीनां महीपतीनां क्षत्त्राणामेकः गुरुरस्त्रवेदोपदेष्टा स प्रसिद्ध इत्यर्थः। अतएव यच्छब्दानपेक्षत्वं तदुक्तङ्काव्यप्रकाशे। अप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षत इति। जमदग्नेरपत्यं पुमान् जामदग्न्यः। गर्गादिभ्यो यञिति यञ्प्रत्ययः। यस्य भीष्मस्य वीर्य्यावधूतो विक्रमाभिभूतः अम्बिकास्वयम्बरे इत्यर्थः। तदा भङ्गप्राप्तिसमये गुणानां शौर्य्यादीनाम्प्रकर्षमतिशयं वीर्य्यातिशयम्। आधारवशमाश्रयाधीनं विवेद जज्ञे स्वविद्यायाः स्वशिष्ये भीष्मे स्वस्मादपि प्रकर्षाधानदर्शनादिति भावः। स्म पादपूरणे भूतेऽर्थे चेति विश्वः॥ १८॥

यस्मिन्निति। यस्मिन् भीष्मे विषये अनीश्वरस्य भावोऽनैश्वर्य्यमसामर्थ्यं नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानामिति विकल्पान्नञः पूर्व्वपदस्य वृद्ध्यभावः। तेन कृतव्यली-

सृजन्तमाजाविषुसंहतीर्वः
सहेत कोपज्वलितं गुरुं कः ।
परिस्फुरल्लोलशिखाग्रजिह्वं
जगज्जिघत्सन्तमिवान्तवह्निम् ॥ २० ॥
निरीक्ष्य संरम्भनिरस्तधैर्यं
राधेयमाराधितजामदग्न्यम् ।

कोऽर्जनितवैलक्ष्यः । दुःखे वैलक्ष्ये व्यलीकमिति यादवः ।
अन्तकोऽपि यमोऽपि पराभवस्थानमिव भीष्मस्येच्छामरण-
त्वादन्तकोऽपि पराजित इवास्ते किमुतान्यइति भावः । स
भीष्मोऽरवो धनुर्धुन्वन् कस्य मनोभयैकप्रवणाभये एकप्रव-
णमेकोन्मुखं शिवभागवतवत्समासः । न कुर्य्यात् सर्व-
स्यापि मनसि भयं कुर्य्यादेवेत्यर्थः ॥ १९ ॥

सृजन्तमिति । आजौ रणे इषुसंहतीर्बाणसङ्घान्
सृजन्तं वर्षन्तं कोपज्वलितमत एव परिस्फुरन्त्यो लोलाश्च
शिखाग्राण्येव जिह्वा यस्य तज्जायोक्तजगत् लोकं जिघत्-
सन्तमत्तुमिच्छन्तम् । अदेः सन्नन्ताच्छतृप्रत्ययः लुङ्सनो-
र्घस्लृ इति घस्लादेशः । अन्तवह्निं कालाग्निमिव
स्थितं गुरुं द्रोणं वोयुष्माकं मध्ये कः सहेत सोढुं प्रभु-
यात् न कोपीत्यर्थः । शकि लिङ् चेति शक्यर्थे लिङ्
॥ २० ॥

निरीक्ष्येति । संरम्भेण कोपेन निरस्तन्याजितमधैर्यं

असंस्तुतेषु प्रसभं भयेषु
जायेत मृत्योरपि पक्षपातः ॥ २१ ॥
यया समासादितसाधनेन
सुदुश्चरामाचरता तपस्याम् ।

निर्विकारचित्तत्वं येन तन्मयोक्तम् । आकारेणैव परैर्धैर्यापहारिणमित्यर्थः । आराधितजामदग्न्यं शुश्रूषितभार्गवं जामदग्न्यादधिगतास्त्ररहस्यमित्यर्थः । राधेयं राधासुतं कर्णम् । स्त्रीभ्यो ढक् । निरीक्ष्य मृत्योरप्यसंस्तुतेष्वपरिचितेषु । संस्तवः स्यात्परिचय इत्यमरः । भयेषु प्रसभं पक्षपातः परिचयो जायेत । मृत्युरप्यस्माद्बिभीयात् किमुतान्य इति भावः । सम्भावनायां लिङ् । दर्शनक्रियापेक्षया समानकर्तृकत्वाभावेऽपि पक्षपातक्रियापेक्षया तत्सम्भवान्निरीक्ष्येति ल्यप्निर्देशः समर्थनीयः प्रधानोपसर्जनभावस्याप्रयोजक इति व्यक्तिविवेककारः । अत्र भयसम्बन्धरहितस्य मृत्योर्भयसम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः ॥ २१ ॥

अथानन्तरकरणीयमागमनप्रयोजनञ्च युग्मेनाह । ययेत्यादि । यया स्त्रिया कर्त्र्या सुदुश्चरामतिदुष्करामपस्यां तपश्चर्यां कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ् । अप्रत्ययादिति स्त्रियामप्रत्ययः । आचरता पशुपतिं प्रति तपः कुर्वतेत्यर्थः । अत एव समासादितं साधनं पाशुपतास्त्ररूपं येन तेन कपिर्हनुमान् केतन-

एते दुरापं समवाप्य वीर्य्य
मुन्मूलितारः कपिकेतनेन ॥ २२ ॥
महत्त्वयोगाय महामहिम्ना
माराधनीन्तां नृप देवतानाम्।
दातुस्प्रदानोचित भूरिधाम्नो
मुपागतः सिद्धिमिवार्ज्जि विद्याम् ॥ २३॥
॥ युग्मम् ॥

ज्जिक यस्य तेनार्ज्जुनेनैत्यर्थः। दुरापमन्यस्य दुर्लभं वीर्य्यन्तेजः समवाप्य एते पूर्व्वोक्ताभीष्मादयः उन्मूलितारः उन्मूलयिष्यन्ते। उन्मूलयतेर्ण्यन्तात्कर्म्मणि लुट् अत्र चिण्वदिडागमेऽपि तस्यासिद्धवदत्राभादिति असिद्धत्वात् णेरनिटि इति णिलोपः तन्निमित्तस्यैवानिटीति निषेधात्। उक्तञ्च वृद्धिश्चिण्वदुक्त हन्तेश्च घत्वं दीर्घश्चोक्तो योनितां वा चिणीति। इट्चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तोविघातीति ॥ २२ ॥

महत्त्वेति। हे नृप महत्त्वयोगाय प्रकर्षलाभाय महामहिम्नां महानुभावान्देवतानामिन्द्रादीनाम् आराध्यतेऽनयेत्याराधनीं तां प्रसादयित्रीमित्यर्थः। करणे ल्युट् ङीप्। भूरिधाम्नीं महाप्रभावाम्। धाम देशे गृहे रश्मौ स्थाने जन्मप्रभावयोरिति विश्वः। अनउपधालोपिनोऽन्यतरस्यामिति वा ङीप्। विद्यामैन्द्रमन्त्ररूपां सिद्धिं साक्षात्कार्य्यसिद्धिमिवेति विद्यायाः अमोघत्वोक्तिः हे महानो-

इत्युक्तवन्तं व्रज साधयेति
प्रमाणयन्वाक्यमजातशत्रोः।
प्रसेदिवांसन्तमुपाससाद
वसन्निवान्ते विनयेन जिष्णुः॥ २४॥
निर्य्याय विद्याथ दिनादिरम्या
द्विम्बादिवार्कस्य मुखान्महर्षेः।
पार्थाननं वह्निकणावदाता
दीप्तिः स्फुरत्पद्ममिवाभिपेदे॥ २५

चित दानपात्र प्रभूतफलभोक्तृत्वादस्य पात्रत्वोक्तिः। इ तु-
मुपागतोऽस्मि॥ २३॥

इतीति। इत्युक्तवन्तम्प्रसेदिवांसम्प्रसन्नम्। भाषायां सदवसश्रुव इति क्वसुः। तं मुनिञ्जिष्णुर्जयनशीलोऽर्ज्जुनः। ग्लाजिस्थश्चेति ग्स्नुप्रत्ययः। व्रज साधयानुतिष्ठेत्येवं रूपं ऽजातशत्रोर्धर्म्मराजस्य स्वयमविद्वेषणशीलत्वादियं संज्ञा। वाक्यं प्रमाणयन् तदादिष्टः सन्नित्यर्थः। अन्ते वसन् छात्र इव। छात्रान्तेवासिनौ शिष्यइत्यमरः। विनयेनानौद्ध-त्येनोपाससाद समीपम्प्राप॥ २४॥

निर्य्यायेति। अथ वह्निकणावदाता स्फुलिङ्गवदुज्ज्वला देवता सान्निध्यादिति भावः। विद्या ऐन्द्रमन्त्ररूपादिना-दिरम्यात् प्रभातभास्करस्य विम्बादिव महर्षेर्व्यासस्य मुखा-न्निर्य्याय निर्गत्यसमासेऽनञ्पूर्व्वे क्त्वाल्यप्। दीप्तिरर्कदी-

योगञ्च तं योग्यतमाय तस्मै
तपःप्रभावाद्वितताार सद्यः।
येनास्य तत्त्वेषु कृतेऽवभासे
समुन्मिमीलेव चिराय चक्षुः ॥ २६ ॥
आकारमाशंसितभूरिलाभ-
न्दधानमन्तःकरणानुरूपम्।

निरर्कदीधितिः स्फुरद्विकसत्पद्ममिव पार्थाननमर्जुनस्य मुखमभिपेदे प्रविष्टा ॥ २५ ॥

योगञ्चेति। स योग्यतमाय अर्हतमाय तस्मै पार्थाय तं वक्ष्यमाणं महिमानं योगं ध्यानं विधिञ्च। योगः संहननोपायध्यानसङ्गति युक्तिष्वित्यमरः। तपःप्रभावात् सद्योवितताार ददौ चिरकालग्राह्यमपीति भावः। येन योगेन तत्त्वेषु प्रकृतिर्महदादिषु। तथाच। मूलप्रकृति-महानहङ्कारोमनश्च पञ्च तन्मात्राणि पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च महाभूतानीति चतुर्विंशति तत्त्वानि। तत्रावभासे साक्षात्कारे कृते सति अस्यार्जुनस्य चक्षुरक्षि चिराय समुन्मिमीलेवोन्मिषितमिवेत्युत्प्रेक्षा। तदा तस्य कोऽपि महानखिलाज्ञानभञ्जनतत्त्वावभासश्चिरादन्धस्य दृष्टिलाभइवाभवदिति भावः॥ २६॥

आकारमिति। आशंसित आख्यातोभूरिलाभोऽनेकश्रेयःप्राप्तिर्येन तन्तथोक्तं महाभाग्यसूचकमित्यर्थः। अन्तः-

नियोजयिष्यन्विजयोदये त-
स्तपः समाधौ मुनिरित्युवाच ॥ २७ ॥
अनेन योगेन विवृद्धतेजा
निजां परस्मै पदवीमयच्छन् ।
समाचराचारमुपात्तशस्त्रो
जपोपवासाभिषवैर्मुनीनाम् ॥ २८ ॥
करिष्यसे यत्र सुदुश्चराणि
प्रसत्तये गोत्रभिदस्तपांसि ।

करणशब्देन तद्वृत्तिरत्रोच्यते । तदनुरूपत्वादनुकूलमुत्साहानुगुणव्यापारचममित्यर्थः । आकारसंनिव्यधानत्वमर्जुनं मुनिर्विजयोदये विजयफलके तपःसमाधौ तपोनियमे । समाधिर्नियमे ध्याने मौने चैव समर्थनदूति विश्वः । नियोजयिष्यन् नियोजयितुमिच्छन्नित्यर्थः । लृट् लृटः सद्वेति सत्प्रत्ययः । इति वक्ष्यमाणमुवाच ॥ २७ ॥

अनेनेति । अनेन सोपदिष्टेन योगेन विवृद्धतेजाः निजाम्पदवीम्परस्मै अयच्छन् परस्य प्रवेशमयच्छन्नित्यर्थः । उपात्तशस्त्रोनिरुद्धीतायुधः सन् हे अर्जुन जपोपवासाभिषवैः स्वाध्यायानशनस्नानैर्मुनीनामाचारं समाचरानुतिष्ठ ॥ २८ ॥

योगविशेषं तपःसिद्धिरित्याशयेन तन्निदर्शयन्नाह ।

शिलोच्चयं चारुशिलोच्चयन्त-
मेष क्षणान्नेष्यति गुह्यकस्त्वाम् ॥ २९ ॥
इति ब्रुवाणेन महेन्द्रसूनु-
महर्षिणा तेन तिरोबभूवे ।
तं राजराजानुचरोऽस्य साक्षात्
प्रदेशमादेशमिवाधितष्ठौ ॥ ३० ॥

करिष्यस इति ॥ यत्र शिलोच्चये गोत्रभिद इन्द्रस्य प्रसत्तये प्रसादाय सुदुश्चराणि तपांसि करिष्यसे चारुशिलोच्चयं रम्यशिखरन्तं शिलोच्चयं गिरिम् इन्द्रकीलम् । अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चया इत्यमरः । त्वामेष गुह्यको यक्षः अनन्तरमेवास्य पुरः प्रादुर्भावादेष इति निर्देशः क्षणान्नेष्यति प्रापयिष्यति ॥ २९ ॥

इतीति । इतीत्थं महेन्द्रसूनुमर्जुनं ब्रुवाणेनोक्तवता वर्त्तमानसामीप्ये इति भूते वर्त्तमानवत्प्रत्ययस्तिरोधानास्य-विलम्बसूचनार्थः । तेन महर्षिणा व्यासेन तिरोबभूवेऽन्तर्दधे । भावे लिट् । राजराजो यक्षराजः । राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियराजयोरिति विश्वः । तस्यानुचरः-पूर्वोक्तयक्षोऽस्य मुनेरादेशं साक्षादिव प्रदेशमर्जुनाधिष्ठितस्थानमधितष्ठौ प्राप इत्यर्थः । स्थाध्वोरभ्यासेन चाभ्यासस्येति षत्वम् ॥ ३० ॥

कृतानतिर्व्याहृतसान्त्ववादे
जातस्पृहः पुण्यजनः स जिष्णौ ।
इयाय सख्याविव सम्प्रसादं
विश्वासयत्याशु सतां हि योगः ॥ ३१ ॥
अथोष्णभासेव सुमेरुकुञ्जान्
विहीयमानानुदयाय तेन ।

कृतेति । स पुण्यजनो यक्षः कृतानतिः कृतप्रणामः जातस्पृहो जाता स्पृहा आकाङ्क्षा यस्य स तथा सन् व्याहृतः उक्तः सान्त्ववादः प्रियवचनं येन तस्मिन् । व्याहारउक्तिर्लपितमित्यमरः । जिष्णावर्ज्जुने सख्यौ सुहृदीव । अथ मित्रं सखा सुहृदित्यमरः । सम्प्रसादं विश्वासितां प्राप । तथाहि सतां साधूनां योगः सङ्गतिराशु विश्वासयति । विश्वासञ्जनयति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३१ ॥

अथेति । अथ उष्णभासा सूर्य्येणोदयाय पुनरुद्गमाय विहीयमानान् त्यज्यमानानिति तमःप्राप्तिकारणोक्तिः । बृहद्द्युतीनसौवर्णत्वाद्दीप्यमानानित्यर्थः । इति तमसः सङ्कोचकारणोक्तिः । सुमेरुकुञ्जानिव अत्र सुमेरुग्रहणं कुञ्जानां सौवर्णत्वद्योतनार्थन्तेनार्ज्जुनेनोदयाय श्रेयसे विहीयमानान् बृहद्द्युतीन् अनेकविधप्रकाशान् पूर्ववद्विशेषणद्वयस्य प्रयोजनमनुसन्धेयम् । पाण्डुसुतान् चतुरस्त्रितमेव दुःखेन कष्टेन कृतउपादितः आसन्नाभवत-

बृहद्व्रतीन् दुःखकृतात्मलाभ-
न्तमः शनैः पाण्डुसुतान्प्रपेदे ॥ ३२ ॥
असंशयालोचितकार्यनुन्नः
प्रेम्णा समानीय विभज्यमानः ।
तुल्याद्विभागादिव तन्मनोभि-
र्दुःखातिभारोऽपि लघुः स मेने ॥ ३३ ॥

तिर्यक्त्वस्य तत्त्वयेत्यम्। तेषां विवेकित्वात् कथञ्चित् वि-
लम्बोदयमित्यर्थः। तमः शोकोऽन्धकारश्च। तमोऽन्धकारे
स्वर्भानौ तमः शोके गुणान्तरे इत्युभयत्रापि विश्वः।
शनैर्मन्दम्प्रपेदे तेषां विवेकित्वाद्भीतमिवेति भावः। अत्र
तमःशब्दस्य श्लिष्टत्वात् श्लेषानुप्राणितेयमुपमा॥ ३२॥

असंशयेति। असंशयमसन्दिग्धं यथा तथा आलो-
चितं विवेचितं यत्कार्यन्तेन नुन्नो निरस्तः इति लघु-
त्वहेतूक्तिः। दुर्विशेषदत्तात्राख्योच्चतरस्यामिति निष्ठान-
त्वम्। कार्य्यगौरवमालोच्य निरस्त इत्यर्थः। तथापि प्रेम्णा
भ्रातृवात्सल्येन कर्त्रा समानीय पुनराकृष्य विभज्यमानः।
समशोकभागीक्रियमाणः तुल्येन प्रेम्णा तुल्य दुःखत्वम्प्रा-
पितमिति भावः। स पूर्वोक्तोदुःखमेवातिभारोप्यतिभारभूत-
मपि दुःखमित्यर्थः। तन्मनोभिस्तेषाञ्चतुर्णाम्भ्रातॄणाम्मनो-
भिस्तुल्याद्विभागादिव पूर्वोक्तात्प्रेमकृतात्समविभागादि-
वेत्यर्थः। वस्तुतस्तु विवेकादेवेति भावः पुनर्विभागग्रहणा-

धैर्येण विश्वास्यतया महर्षे-
स्तीव्रादरातिप्रभवाच्च मन्योः।
वीर्यञ्च विद्वत्सु सुते मघोनः
स तेषु न स्थानमवाप शोकः॥ ३४॥
तान् भूरिधाम्नश्चतुरोऽपि दूरं
विहाय यामानिव वासरस्य।

न्तस्य हेतुत्वोक्तेरर्थमनुवादादमदोषः। लघुर्मेघोऽपि यथा एकोऽनेकधा विभज्य बहुभिर्दृश्यमानो महानपि सरोऽल्पतरं मन्यते तद्वदित्यर्थः॥ ३३॥

अथैवम्भूतानां आक्रम्यमाणमपि शोकं विवेको निर्जिगायेत्याह। धैर्येणेति। धैर्येण तेषां निसर्गतो निर्विकारचित्तत्वेन तथा महर्षेर्व्यासस्य प्रवर्त्तकस्येति शेषः विश्वास्यतया अश्रद्धेयवचनत्वेनेत्यर्थः। अरातिप्रभवादरातिहेतुकात् तीव्राद्दुःसहान्मन्योः क्रोधाद्धेतोस्तथा अर्जुनप्रभा-परिज्ञानाच्चेति हेत्वन्तरं विशेषणमुखेनाह। मघोनः सुतेऽर्जुने वीर्यम्। न लोकेत्यादिना षष्ठीप्रतिषेधः विद्वत्सु ज्ञातवत्स्विति यावत्। विदेः शतुर्वसुरिति वैकल्पिको वस्वादेशः। तेषु पार्थेषु स शोकः स्थानं स्थितिं नावाप न प्राप॥ ३४॥

तानिति। तत् पार्थत्यागवत् शर्म्म सुखम्। शर्म्मशा-तसुखानि चेत्यमरः। तद्विरुद्धमशर्म्म दुःखम्। न शर्मेति नञ्समासः। भूरिधाम्नस्तेजस्विन इति हानिहेतुत्वोक्तिः-

एकीभवत्तद्गमनं कृष्णां
विभावरीं ध्वान्तमिव प्रपेदे ॥ ३५ ॥
तुषारलेखाकुलितोत्पलाभे
पर्यश्रुणी मङ्गलभङ्गभीरुः।
अगूढभावाऽपि विलोकने सा
न लोचने मीलयितुं विषेहे ॥ ३६ ॥

चतुरस्वानुयायीत्यादरस्य नूपुरस्वानसहचरीयानान्मुखरा-णिव विहाय त्यक्त्वा एकीभवत् एकराशिभवत् सत्। श्रे-ण्यादयः कृतादिभिरित्यर्थे कर्मधारयः श्रेण्यादिराकृति-गणेति शाकटायनः। कृष्णां विभावरीं कृष्णपक्षरात्रिं ध्वान्तमिव कृष्णान्द्रौपदीं प्रपेदे प्राप ॥ ३५ ॥

तुषारेति। सा द्रौपदी विलोकनेऽर्जुनावलोकने-ऽगूढभावा अगूढाभिप्रायापि स्फुटाभिलाषिण्यपि चागत्। भावोऽभिलाषक्रियाचेष्टाभूत्यभिप्रायजन्तुष्विति वैजयन्ती। मङ्गलभङ्गभीरुर्मङ्गलहानेर्भीता सती पर्यश्रुणी परिगता-श्रुणी वाष्पावृते इत्यर्थः। अतएव तुषारलेखाकुलितोत्-पलाभे हिमबिन्दुसहितेन्दीवरसन्निभे इत्युपमालङ्कारः। लोचने निमीलयितुं न विषेहे न शशाक अश्रुणोः स्रा-वकत्वेऽपि तन्निपातस्यामङ्गलत्वात्तन्निवर्तकं निमीलनं सा न चकारेत्यर्थः ॥ ३६ ॥

अकलिमेति। इन्द्रसूनुरर्जुनः क्रियया निवृत्तः

अकृत्रिमप्रेमरसाभिरामं
रामार्पितं दृष्टिविलोभि दृष्टम् ।
मनःप्रसादाञ्जलिना निकामं
जग्राह पाथेयमिवेन्द्रसूनुः ॥ ३७ ॥
धैर्यावसादेन हृतप्रसादा
वन्यद्विपेनेव निदाघसिन्धुः ।

कृत्रिम: । डुकृञ: क्त्रिरिति क्त्रिः क्त्रेर्मम् नित्यमिति मप्रत्ययः तद्भिन्नम् । प्रेमैव रस: अकृत्रिमेण प्रेमरसेनाभिरामम् अन्यत प्रेमरसेन मधुरादिना चाभिरामम् । रामया रमण्यार्पितं दृष्टिं विलोभयतीति दृष्टिविलोभि दृष्टिप्रियमित्यर्थः दृष्टं दर्शनम् । नपुंसके भावे क्तः । मनःप्रसादः प्रसन्नमनस्त्वर्थः । सोऽञ्जलिरिवेत्युपमितसमासः तेन मनःप्रसादाञ्जलिना पथि साधु पाथेयं शम्बलमिव । पथ्यतिथिवसतिस्वपतेर्ढञ् । निकाममतिशयेन जग्राह रामार्पितस्याथेयस्यापि श्लेषाद बहलीत्यागमः ॥ ३७ ॥

धैर्येति । वन्यद्विपेन वन्यगजेनालुक्ततवलुप्तजला निदाघसिन्धुर्ग्रीष्मनदीव निदाघग्रहणन्दौर्बल्यद्योतनार्थं धैर्यावसादेन धैर्यभ्रंशेन कर्त्रा हृतप्रसादा क्षोभजनितेत्यर्थः । राजपुत्री क्षत्रियसुता द्रौपदी अतः चाचपुतासेव वक्ष्यतीति भावः । निरुद्धवाष्पोदयं संरुद्धरोदनसन्नकण्ठं हीनकण्ठस्वरम् अथ तयोरुभयोः क्षतवक्त्रं

निरस्तवाष्पोदयसन्नकण्ठ
मुवाच कृच्छ्रादिति राजपुत्री ॥ ३८ ॥

मग्नां द्विषच्छद्मनि पङ्कभूते
सम्भावनां भूतिमिवोद्धरिष्यन्।
आधिद्विषामा तपसां प्रसिद्धे
रस्मद्विना मा भृशमुन्मनीभूः ॥ ३९ ॥

ब्रीत्योः क्रियाविशेषणयोर्व्विशेषणसमासः कृच्छ्रात्कथञ्चि-दिति वक्ष्यमाणमुवाच॥ ३८ ॥

मग्नामिति। पङ्कभूते पङ्कोपमिते। भूतं क्ष्मादौ पिशाचादौ न्याये सत्योपमानयोरिति विश्वः। द्विषच्छद्मनि शत्रुकपटे मग्नां दुरुद्धरामित्यर्थः। सम्भावनां योग्यतां गौरवमिति यावत्। भूतिं सम्पदमिव। भूतिर्भस्मनि सम्पदीत्यमरः। उद्धरिष्यन् उपकारकस्तस्मेवेतिशेषः। आधिद्विषो दुःखच्छिदान्तपसामाप्रसिद्धेः सम्यक् सिद्धिपर्य्यन्तमस्मद्विना अस्माभिर्व्विनेत्यर्थः। पृथग्विनेत्यादिना विकल्पात्पञ्चमी। भृशं माउन्मनीभूः अस्मद्विरहात् दुर्म्मना माभूरित्यर्थः। दौर्म्मनस्यस्य तपःपरिपन्थित्वादितिभावः। माङीत्याशीरर्थे लुङ् न माङ्योगे इत्यडागमप्रतिषेधः। अनुन्मना उन्मनाः सम्पद्यमान उन्मनी अभूततद्भावे च्विः अरुर्मनश्चक्षुश्चेतोरहोरजसां सलोपश्चेति सकारलोपः अस्य च्वावितीकारः ॥ ३९ ॥

यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसङ्ख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ४० ॥

लोकं विधात्रा विहितस्य गोप्तुं
क्षत्त्रस्य मुष्णन् वसु जैत्रमोजः ।
तेजस्वितायां विजयैकवृत्ते
र्निघ्नन् प्रियम्प्राणमिवाभिमानम् ॥ ४१ ॥

अथानौत्सुक्यदार्ढ्यमेवास्य सर्वार्थसिद्धिनिदानत्वमाह । यश इति । यशोऽधिगन्तुं कीर्त्तिं लब्धुमित्यर्थः । सुखस्य लिप्सया लब्धुमिच्छया वा मनुष्यसङ्ख्यां मनुष्यगणनामतिवर्त्तितुमतिक्रमितुं अमानुषकर्म्म कर्त्तुं वेत्यर्थः । अभियोगभाजामभिनिवेशवतां निरुत्सुकानामदुर्मनायमानानामित्यर्थः । सिद्धिः पूर्वोक्तयशःसुखाद्यर्थसिद्धिः समुत्सुकेवानुरक्तकान्तेवाङ्कमन्तिकमुपैति तस्मादबहिरङ्गदुःखमातपः सिद्धेः सोढव्यमिति भावः ॥ ४० ॥

अथास्य मन्यूद्दीपनद्वारा तपःप्रवृत्तिमाशयितुमरिनिकारान्तांश्चतुर्भिरुद्घाटयति । लोकमिति । विधात्रा ब्रह्मणा लोकं गोप्तुं विहितस्य सृष्टस्य क्षत्त्रस्य क्षत्रियजातेः सम्बन्धि जयनशीलं जेतृ तदेव जैत्रम् । जेतृशब्दात्तृजन्तात्प्रज्ञादिभ्यश्चेति स्वार्थेऽण्प्रत्ययः । ओजोब

व्रीडानतैराप्तजनोपनीतः
संशय्य कृच्छ्रेण नृपैः प्रपन्नः ।
वितानभूतं विततं पृथिव्यां
यशः समूहन्निव दिग्विकीर्णम् ॥४२॥

दीप्तिर्स्त्री । श्रोजोबले च दीप्तौ चेति विश्वः । तदेव वसु धनम् इति रूपकालङ्कारः । मुष्णन्नपहरन् । परिनिकृतस्य कुतः चात्त्रन्तेजइति भावः । किञ्च विजयैकवृत्तेर्विजयैकजीविताया: चत्त्रियस्य विनितमिति स्मरणाद्दिति भावः । वृत्तिर्वर्त्तनजीवने इत्यमरः । तेजस्वितायास्तेजस्विनामित्यर्थः । तेजः प्राधान्यद्योतनार्थं भावप्रधानोनिर्देशः प्रियम्प्राणमिव प्राणसममित्यर्थः । अभिमानमहङ्कारं निघ्नन् खण्डयन् । तेजस्विनां प्राणहानिप्राया मानहानिरिति भावः ॥ ४१ ॥

अनिक्षेपाय बन्धनन्तेजः प्राणात्ययेष्वपि न त्याज्यमित्याह । व्रीडेति । पुनश्च आप्तजनोपनीतः श्रावितः प्रापित इत्यर्थः । तथापि संशय्य संदिह्यासम्भावितबुद्धेरिति भावः । व्रीडानतैर्जुगुप्सितवृत्तान्तश्रवणादिति भावः नृपै र्देशान्तरस्थैः कृच्छ्रेण प्रपन्नः प्राप्तः आप्तोक्तत्वात्कथञ्चिद्विश्वस्त इत्यर्थः । यः श्रृण्वतामपि दुःसहः किमुतानुभवतामिति भावः । इत्येषा पूर्वेषां व्याख्या । अन्यथापि व्याख्यायते । आप्तजनोपनीतः ज्ञातिकृतः संशय्य कथमिदमन्याय्यमुपेक्ष्यमिति विचार्य्य व्रीडानतैर्जुगुप्सितकर्म्मदर्शनादिति

वीर्य्यावदानेषु कृतावमर्ष
स्तन्वन्नभूतामिव सम्प्रतीतिम् ।
कुर्व्वन् प्रयामक्षयमायतीना
मर्कत्विषामह्व इवावशेषः ॥ ४३ ॥

भावः । द्वैपैः सभास्थैः कृच्छ्रेण प्रपन्नोऽङ्गीकृतः गोत्रकल-
हेषु मध्यस्थैरुदासितव्यमिति बुद्ध्वा उपेक्षितइत्यर्थः ।
पक्षद्वयेऽपि प्रपन्नइत्यत्राप्तजनोपनीतत्वस्य पदार्थभूतस्य
विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गमलङ्कारः । पृथिव्यां
वितानभूतमुल्लोचतुल्यम् । अस्त्रीवितानमुल्लोच इत्यमरः ।
दिग्विकीर्णं दिगन्तलग्नं वितानमपि दिगन्तलग्नमिति
भावः । विततम्प्रथितं यशः समुद्रन्निव सङ्कोचयन्निवे-
त्युत्प्रेक्षा अरातिपरिभूतस्य कुतः कीर्त्तिरिति भावः ॥४२॥

वीर्य्येति ॥ पुनश्च वीर्य्याण्येवावदानानि तेषु कृतावमर्षः
कृतास्कन्दनः पुराकृतपराक्रमोद्भूतान्यपि प्रच्छन्नित्यर्थः ।
अवदानङ्कर्म्म वृत्तमित्यमरः । अतएव सम्प्रतीतिं ख्या-
तिम् । प्रतीते प्रथित ख्यातवित्तविज्ञातविश्रुता इत्यमरः ।
अभूतामविद्यमानामिवेत्युत्प्रेक्षा सतोऽप्यसत्त्वमुत्प्रेक्ष्यते ।
तन्वन् कुर्व्वन् । पुनश्चाह्नोऽवशेषोदिनान्तोऽर्कत्विषामि-
वायतीनामुत्तरकालानां प्रयामक्षयन्दैर्घ्यनाशं कुर्व्वन् इति
श्रौती पूर्णोपमा । अरिनिराकृतस्य कुतश्चिरावस्थान-
मिति भावः ॥ ४३ ॥

प्रसह्य योऽस्मासु परैः प्रयुक्तः
स्मर्तुं नशक्यः किमुताधिकर्तुम् ।
नवीकरिष्यत्युपशुष्यदार्द्रः
स त्वद्विना मे हृदयन्निकारः ॥ ४४ ॥

कलापकम् ।

प्राप्तोऽभिमानव्यसनादसह्य
न्दन्तीव दन्तव्यसनाद्विकारम् ।

प्रसह्येति । पुनश्च परैः शत्रुभिरस्मासु प्रसह्य प्रयुक्तः आचरितो योनिकारः परिभवः केशाकर्षणरूपः स्मर्तुं न शक्यः अधिकर्तुमनुभवितुङ्किमुत । यस्य स्मरणमपि दुःसहमनुभवस्तु सुतरां दुःसह इति किमु वक्तव्यमित्यर्थः । स निकारस्त्वद्विना त्वया विना । पृथग्विनेत्यादिना पञ्चमी । आर्द्रः सन् कुतश्चिदभिभूतात्पुराणप्रहार इव तद्विरहदुःखात्पुनर्नवीकरिष्यति नवीभविष्यतीत्यर्थः । उपशुष्यत् त्वया विना शुष्कमिति भावः । दुःखसम्भवं शोषपदार्थः मे हृदयन्नवीकरिष्यति आर्द्रीकरिष्यति व्रणमिवेति भावः । दुःखितस्य पुनर्दुःखोपचयः शोषप्रायमपि दुःखहेतुम्पुनरुद्घाटयतीत्यर्थः । अत्र शोषादिविशेषणसाम्याद्व्रणाद्यप्रस्तुतार्थप्रतीतेः समासोक्तिरलङ्कारः ॥ ४४ ॥

पुनः प्रकारान्तरेण मन्युमुद्दीपयति । प्राप्त इत्यादिभिस्त्रिभिः । तत्र वक्ष्यमाणप्रत्यभिज्ञानहेतुभिर्द्वन्द्वयं वि-

द्विषत्प्रतापान्तरितोरुतेजाः
शरद्घनाकीर्णइवादिरह्नः ॥ ४५ ॥
सव्रीडमन्दैरिव निष्क्रियत्वा
न्नात्यर्थमस्त्रैरवभासमानः ।
यशःक्षयक्षीणजलार्णवाभ
स्त्वमन्यमाकारमिवाभिपन्नः ॥ ४६ ॥

शिनष्टि । अभिमानस्य व्यसनाद्भ्रंशात् । व्यसनं विपदि भ्रंशे दोषे कामजकोपजइत्यमरः । इन्द्रव्यसनाद्दन्तभङ्गा दन्तीवासन्नं विकारं वैरूप्यमाप्तः । अतीन प्रत्यभिज्ञायतइति भावः । एवमुत्तरत्राप्यनुसन्धेयम् । पुनश्च द्विषत्प्रतापेन शत्रुतेजसान्तरितन्तिरस्कृतम् उरुतेजः प्रतापो यस्य स तथोक्तः अतएव शरद्घनाकीर्णः शरन्मेघच्छन्नोऽह्नआदिः प्रत्यूषइव स्थितः । तद्वदेवाप्रत्यभिज्ञायमान इत्यर्थः । मध्याह्नस्तु मेघावरणोऽपि कथञ्चित्प्रत्यभिज्ञायत एवेत्याशयेनोक्तमादिरिति ॥ ४५ ॥

सव्रीडेति । पुनश्च निष्क्रियत्वादर्थक्रियाशून्यत्वात् सव्रीडमन्दैरिव सव्रीडैरतएव मन्दैरपटुभिरिव स्थितैरित्युत्प्रेक्षा । मूढाल्पा पटुनिर्भाग्यामन्दाः स्युरित्यमरः । अस्त्रैरत्यर्थं नावभासमानः न प्रकाशमानः पूर्वन्तु नैवमिति भावः । किन्तु यशःक्षयाद्धेतोः क्षीणजलोयोऽर्णवस्तदाभस्तत्सदृशस्त्वमन्यमाकारमभिपन्नः प्राप्तइवे स्थितइवेत्युत्प्रेक्षा तस्य क्षीणजलार्णवाभइत्युपमासंसृष्टिः ॥ ४६ ॥

दुःशासनाकर्षरजोविकीर्णै-
रेभिर्विनाथैरिव भाग्यनाथैः ।
केशैः कदर्थीकृतवीर्य्यसारः
कच्चित्स एवासि धनञ्जयस्त्वम् ॥ ४७ ।
विशेषकम् ॥

स क्षत्रियस्त्राणसहः सतां य-
स्तत्कार्मुकं कर्म्मसु यस्य शक्तिः ।

दुःशासनेति । पुनश्च दुःशासनस्य हस्तैराकर्षं आकर्षणं स एव रजोधूलिः मालिन्यहेतुत्वादिति भावः तेन विकीर्णैर्व्विक्षिप्तैरतएव विनाथैरिव स्थितवतां युष्माकमसत्त्वप्रायत्वादनाथैरिव स्थितैरित्युत्प्रेक्षा अन्यथा कथमियन्तुर्द्दशेति भावः । किन्तु भाग्यनाथैर्द्दैवमात्रशरणैः अन्यथा स्वरूपमपि लुप्येतेति भावः । एभिः परिदृश्यमानैरसंयमितैरिति भावः । केशैः शिरोरुहैः कुत्सितोऽर्थो वस्तु कदर्थः । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः । कोः कत्तत्पुरुषेऽचीति कुशब्दस्य कदादेशः । कदर्थीकृतौ गर्ह्यीकृतौ वीर्य्यसारौ शौर्य्यबले यस्य स तथोक्तः । इत्यम्पूर्व्वविलक्षणस्त्वं स एव धनञ्जयोऽपि कच्चित् । कच्चित्काम प्रवेदन इत्यमरः । स एव चेत्त्वं नैवमस्मानुपेक्षसे इति भावः । ४७ ॥

अथाप्युपेक्षणे दोषमाह । स इति । क्षतान्त्रायत इति

वहन् द्वयीं यद्यफलेऽर्थजाते
करोत्यसंस्कारहतामिवोक्तिम् ॥ ४८ ॥
वीतौजसः सन्निधिमात्रशेषा
भवत्कृतां भूतिमपेक्षमाणाः ।

क्षत्त्रं क्षत्त्रियकुलम् । सुपीति योगविभागात्कप्रत्ययः पृषो-दरादित्वात्पूर्वपदस्याकारलोपः । अथवा क्षदिति क्विब-न्तोपपदात्कप्रत्ययः । क्षत्त्रे जातः क्षत्त्रियः । क्षत्रात् घइति घप्रत्ययः । कर्म्मणे प्रभवतीति कार्मुकम् । कर्म्मण उकञि-त्युकञ्प्रत्ययः । एवं स्थिते वाक्यार्थः कथ्यते यः सतां साधूनां सहतइति सहः पचाद्यच् । यस्त्राणस्य सहस्त्रा-णसहोरक्षणक्षमः सएव क्षत्त्रियशब्दवाच्यः । तथा यस्य कार्मुकस्य कर्म्मसु रणक्रियासु शक्तिः अस्तीति शेषः । तदेव कार्मुकशब्दवाच्यम् । अन्यैतौ शब्दौ मुख्यौ नान्यत्रेत्यर्थः । एवंस्थिते द्वयीं द्विविधामुक्तिं द्वाविमौ क्षत्त्रियकार्मुकशब्दावित्यर्थः । अफले पूर्वोक्तावयवार्थ-शून्यइत्यर्थः । अर्थजाते स्वाभिधेयसामान्यजातिमात्र-इत्यर्थः । जातञ्जात्योघजन्मस्विति विश्वः । वहन् वर्त्तयन् संस्कारहतामव्युत्पत्तिदूषितामिव करोतीत्युत्प्रेक्षा । तस्मा-त्त्वमस्माद्रक्षणेनोक्तदोषादात्मानं मोचयस्वेत्यर्थः ॥ ४८ ॥

अथ त्वद्गुणा अपि नोज्जीवयेयुरित्याह । वीतेति । हे पार्थ वीतौजसोनिष्प्रभाः सन्निधिमात्रशेषाः सत्ता-मात्रावशिष्टाः भवत्कृतां भवता करिष्यमाणाम् । द्वाभ्यं-

समानदुःखादिव नस्त्वदीयाः
सरूपतामस्पार्थ गुणाभजन्ते ॥४६॥

आक्षिप्यमाणं रिपुभिः प्रमादा
न्नागैरिवालूनसटं मृगेन्द्रम् ।
त्वान्धूरियं योग्यतयाधिरूढ़ा
दीप्तया दिनश्रीरिव तिग्मरश्मिम् ॥ ५०॥

मायामूतवच्चेति भूतवत्प्रत्ययः । भूतिमभ्युदयमपेक्षमा-णास्त्वदीया गुणाः समानदुःखाः समदुःखभाजइव नोऽस्माकं सरूपतां वीतौजस्त्वादिसाधर्म्यं भजन्तइत्युपमा सा च समानदुःखाइवेत्युत्प्रेक्षया वीतौजस्त्वादिसम्भावितयानुप्राणितेत्यनुसन्धेयम् । ४८ ॥

तथापि ममैव कोऽयम्भारइत्यत आह । आक्षिप्येति । प्रमादात् मत्ताहीनत्वान्नतु दौर्बल्यादितिभावः । रिपुभिराक्षिप्यमाणमधिक्षिप्यमाणमतएव प्रमादान्नागैर्गजैः । मतेभाहिगजानागाइति वैजयन्ती ॥ आलूनसटमाक्षिप्तकेसरम् । सटा जटाकेसरयोरिति विश्वः । मृगेन्द्रं सिंहमिव स्थितन्त्वामियन्धूः कार्य्यभारस्तिग्मरश्मिं सूर्य्यं दीप्तया दिनश्रीरिव योग्यतया निर्व्वाहकतया । अधिरूढ़ा आरूढ़वती कर्त्तरि क्तः । त्वदधीनेत्यर्थः ॥ ५० ॥

पूर्व्वं निर्व्यवसायस्य स क्षत्रियइत्यादिना दोषउक्तः सम्प्रति व्यवसायिनोगुणमाह । करोतीति । यः पुमान-

करोति यः सर्व्वजनातिरिक्तां
सम्भावनामर्थवतीं क्रियाभिः ।
संसत्सु जाते पुरुषाधिकारे
न पूरणी तं समुपैति सङ्ख्या ॥ ५१ ॥
प्रियेषु यैः पार्थ विनोपपत्ते-
र्व्विचिन्त्यमानैः क्लममेति चेतः ।
तव प्रयातस्य जयाय तेषां
क्रियादघानां मघवा विघातम् ॥ ५२ ॥

शेषजनादितरजनादतिरिक्तामधिकां सर्व्वातिशायिनी-मित्यर्थः । सम्भावनां योग्यतां क्रियाभिश्चरितैरर्थवतीं सफलाङ्करोति । तं पुमांसं संसत्सु सभासु । सभासमिति संसदित्यमरः । पुरुषाधिकारे योग्यपुरुषगणनाप्रस्तावे जाते सति पूर्य्यतेऽनेनेति पूरणी सङ्ख्या द्वित्वादिसङ्ख्या न समुपैति न गच्छति । अद्वितीयो भवतीत्यर्थः । तस्मादसाधारणलाभाय त्वयापि महानुत्साह आस्थेयइति भावः ॥ ५१ ॥

अथ द्वाभ्यां सुलभविपक्षस्य प्रोषितस्यार्ज्जुनस्य कर्त्तव्यमुपदिशति । प्रियेष्विति । हे पार्थ प्रियेष्वस्मासु विषये उपपत्तेः कारणाद्विनैव विचिन्त्यमानैरकस्मादेवाशङ्क्यमानैर्यैरघैश्चेतः क्लमं दुःखमेति जयाय प्रयातस्य तव सम्बन्धिना तेषामघानां व्यसनानाम् । दुःखैनोव्यसनेष्वघमि-

मागाश्चिराय्यैकचरः प्रमादं
वसन्नसम्बाधशिवेऽपि देशे।
मात्सर्य्यरागोपहतात्मनां हि
स्खलन्ति साधुष्वपि मानसानि। ५३ ॥
तदाशु कुर्वन्वचनं महर्षे
र्मनोरथान्नः सफलीकुरुष्व।

त्यमरः। मघवा इन्द्रः यो ऽस्याभिरूपास्य इति भावः विघातं निवारणं क्रियात्करोतु। आशिषिलिङ्। तस्मादसञ्चिन्तया न चेतः खेदयितव्यं जयार्थिना त्वया अन्यथा तदसम्भवादिति भावः॥ ५२ ॥

मागादिति। असम्बाधोऽसङ्कटः विजनइत्यर्थः। सङ्कटं ना तु सम्बाधइत्यमरः। शिवोनिर्बाधः इयोरन्यतरस्य विशेष्यत्वविवक्षायां विशेषणसमासः। अस्मिन्नसम्बाधशिवेऽपि देशे चिराय चिरम् एकचरः एकाकी वसन् प्रमादन् दौर्बल्यं मागाः। इणोगालुङीति गादेशः। ननु निःस्पृहस्य ममाकिञ्चित्करः प्रमादइति वाच्यमित्याशङ्क्याह। मात्सर्य्येति। मत्सरएव मात्सर्य्यं द्वेषः रागः स्नेहः ताभ्याम् उपहतात्मनां रागद्वेषदूषितस्वभावानां मानसानि मनांसि साधुषु सज्जनेष्वपि विषये स्खलन्ति विकुर्वन्ति। अत्र प्रमादनिषेधलक्षणप्रस्तुतरूपकारणेनार्थप्राप्तिरूपकार्य्यस्य व्यतिरेककारणसमर्थनाद्वैधर्म्येण कार्य्यकारणसमर्थनरूपोऽर्थान्तरन्यासः। ५३।

प्रत्यागतन्त्वास्मि कृतार्थमेव
स्तनोपपीडम्परिरब्धुकामा ॥ ५४ ॥
उदीरितान्तामिति याज्ञसेन्या
नवीकृतोद्ग्राहितविप्रकाराम्।
आसाद्य वाचं स भृशन्दिदीपे
काष्ठामुदीचीमिव तिग्मरश्मिः ॥ ५५ ॥

निगमयति। तदिति। तत्तस्मात् कारणात्। आशु-शीघ्रं महर्षेर्व्वचनं कुर्व्वन् तपस्यन्नित्यर्थः। नोऽस्माकं मनोरथान् सफलीकुरुष्व अरिनिर्य्यातनेनास्मान् प्रतिष्ठापयेत्यर्थः। प्रार्थनायां लोट्। किञ्च कृतार्थं कृतकृत्यं प्रत्यागतमेव त्वा त्वाम्। त्वामौ द्वितीयाया इति त्वादेशः। स्तनयोरुपपीड्य इति स्तनोपपीड़म्। सप्तम्याञ्चोपपीडरुधकर्ष इति णमुल्। परिरब्धुङ्कामोयस्याः सा परिरब्धुकामाऽस्मि। आलिङ्गितुमिच्छामीत्यर्थः। तुङ्काममनसोरपीति मकारलोपः। प्राकार्य्यसिद्धेः प्रमदालिङ्गनमपि न प्रीतिदमिति भावः ॥ ५४ ॥

उदीरितामिति। सोऽर्ज्जुनः इतीत्थं यज्ञसेनस्यापत्येन स्त्रिया द्रौपद्या उदीरितामुक्ताम्। नवीकृतः पुनरुद्वाटनेन तया प्रत्यायित अतएव उद्ग्राहितोमनसि निधापितश्च विप्रकारः परिभवोयया सा तां वाचमासाद्याकर्ण्येत्यर्थः। उदीचीङ्काष्ठान्दिशम्। दिशस्तु ककुभः काष्ठा-

अथाभिपश्यन्निव विद्विषः पुरः
पुरोधसारोपितहेतिसंहतिः ।
बभार रम्योऽपि वपुः स भीषणं
गतः क्रियाम्मन्त्र इवाभिचारिकीम् ॥ ५६

अविलङ्घ्यविकर्षणम्परैः
प्रथितज्यारवकर्म कार्मुकम् ।

आशाश्च हरितश्च ताइत्यमरः । तिग्मरश्मिरिव भृशं दिदीपे जज्वाल चुक्रोधेत्यर्थः ॥ ५५ ॥

अथेति । अथ द्विषः शत्रून् पुरोऽभिपश्यन्निव स्थितः तथा पुरोधसा धौम्येनारोपिता समन्त्वं समाहिता हेति-संहतिरायुधकलापोयस्य स तथोक्तः । हेतिर्ज्वालाङ्कुरा-युधइति वैजयन्ती । सोऽर्ज्जुनोरम्यः सौम्यः सन्नपि अभि-चारः परहिंसा प्रयोजनं यस्याः सा आभिचारिकी । तदस्य प्रयोजनमिति ठक् । तां क्रियाङ्गतः अभिचारक-र्म्मणिनियुक्तइत्यर्थः । मन्त्रइव रम्यः प्रकृत्या रमणीयः भीषयतइति भीषणम् । नद्यादित्वात् ल्युप्रत्ययः । वपुर्ब-भार प्राप्तान्तोमन्त्रः प्रयोगभेदादिव सोप्यवस्थाभेदाद्भी-षणोबभूवेत्यर्थः ॥ ५६ ॥

उक्तमायुधारोपणं विहृत्य स्वन्प्रस्थानमाह त्रिभिः । अविलङ्घ्यमिति । शत्रुभिरविलङ्घ्यमनतिक्रमणीयं विकर्षणं यस्य तत् । अमोघाकर्षणमित्यर्थः । किञ्च प्रथितं ज्यारवो-

अगतावरिदृष्टिगोचरं
शितनिस्त्रिंशयुजौ महेषुधी ॥ ५७ ॥
यशसेव तिरोदधन्मुहु-
र्महसा गोत्रभिदायुधक्षतीः ।
कवचञ्च सरत्नमुद्वहन्
ज्वलितज्योतिरिवान्तरन्दिवः ॥ ५८ ॥

गुणध्वनिः कर्म बाणमोचनादिकञ्च यस्य तत्कार्मुकञ्चोद्वहन्नित्यन्वयः । तथाऽरीणां दृष्टिगोचरं दृष्टिपथमगतौ आहवेष्वनिवर्त्तित्वादस्येति भावः । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः । डच्प्रत्यये सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानात्समासान्तः । तेन शितेन तीक्ष्णेन युक्त इति शितनिस्त्रिंशयुजौ । सत्सूद्विषेत्यादिना क्विप् । महेषुधी महानिषङ्गौ इषवो धीयन्तेऽनयोरिति विग्रहः कर्मण्यधिकरणे चेति किप्रत्ययः । तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः । तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय इत्यमरः ॥ ५७ ॥

यशसेति । किञ्च । गोत्रभिद इन्द्रस्यायुधक्षतीः वज्रप्रहारव्रणानि खाण्डवदाहसमये वा इति भावः । महसा स्वकान्त्या यशसेव मूर्त्तया कीर्त्त्येव मुहुस्तिरोधत् आच्छादयन् । सरत्नं रत्नसहितम् अत एव ज्वलितज्योतिर्दीप्ततारकम् । ज्योतिस्ताराग्निभाज्वालादृक्पुत्राध्वरात्मस्विति वैजयन्ती । दिवोऽन्तरं नभोमध्यमिवावस्थितम् । अन्तरं

अलकाधिपभृत्यदर्शितं
शिवमुर्वीधरवर्त्म सम्प्रयान्।
हृदयानि समाविवेश स
वनमुद्वाष्पदृशां तपोभृताम् ॥ ५८॥
विशेषकम् ॥

अनुजगुरथ दिव्यन्दुन्दुभिध्वानमाशाः
सुरकुसुमनिपातैर्व्योम्नि लक्ष्मीर्वितेने।

परिधानीये वाह्ये स्वीयेऽन्तरात्मनि । क्लीवे मध्ये प्रकाशे चेति वैजयन्ती। कवचस्योद्वहन् ॥ ५८॥

अलकेति । सोऽर्ज्जुनोऽलकाधिपभृत्येन यक्षेण दर्शितमतः शिवं निर्वाधमुर्वीधरवर्त्म हिमवन्मार्गमभिति सम्प्रयान् प्रगच्छन् वनमुद्वाष्पदृशां वियोगदुःखात्साश्रुनेत्राणान्तपोभृतां द्वैतवननिवासिनान्तपस्विनां हृदयानि समाविवेश खेदयामासेत्यर्थः। सम्पूर्वस्य शिवतेः खेदार्थत्वमवसेयम् ॥ ५८॥

अनुजगुरिति । अथाशादिशः दिवि भवं दिव्यम्। द्युप्रागपागुदक्प्रतीचो यत्। दुन्दुभिध्वानमनुजगुः दध्वनुः। अनुगायतेर्लिट्। व्योम्नि सुरकुसुमनिपातैर्लक्ष्मीर्वितेने। पुष्पवृष्टिव्याजनिष्टेत्यर्थः। किञ्च अनिलतायाश्चलावेलायां कूले या वीचयस्ता एव बाहवो यस्य स तथोक्तः। वेला कूलविकारयोरिति शाश्वतः। पयोधिः स्फुरन्ती मुल्लसन्तीं

प्रियमिव कथयिष्यन्नालिलिङ्ग स्फुरन्तीं
भुवमनिभृतवेलावीचिबाहुः पयोधिः ॥ ६० ॥

इति श्रीभारविकृतौ किरातार्ज्जुनीये
महाकाव्ये तृतीयः सर्गः ॥ ३ ॥

हर्षात् स्पन्दमानाञ्च भुवम्प्रियमिष्टं भारावतारणरूपङ्कथयिष्यन्निव कथयितुमिवेत्यर्थः । लृट् शेषे चेति चकारात्क्रियार्थायां क्रियायां लृट् । आलिलिङ्ग खल्विदं प्रियवक्तुरेव कार्य्यमहर्त्तत्वादस्येति भावः । अत्र विशेषणमात्रसाम्यादप्रस्तुतस्य गम्यत्वात्समासोक्तिरलङ्कारः । तत्र चाप्रकृतयोर्भूमिसमुद्रयोः प्रतिपन्नाभ्यां नायकाभ्यामभेदे लक्षणातिशयोक्तिवशादालिङ्गनोक्तिरिति रहस्यम् । एवमतिशयोक्त्युत्थापितासमासोक्तिः प्रियकथनात् खेदवञ्जीवयति तदङ्गभावमञ्जनतदुत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्कर इति विवेचनीयम् ॥ ६० ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्ज्जुनीयव्याख्यायां घण्टापथसमाख्यायां तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ।



ततः स कूजत्कलहंसमेखलां
सपाकशस्याहितपाण्डुतागुणाम् ।
उपाससादोपजनञ्जनप्रियः
प्रियामिवासादितयौवनाम्भुवम् ॥ १ ॥
विनम्रशालिप्रसवौघशालिनी
रपेतपङ्काः ससरोरुहाम्भसः ।

ततइति । ततः प्रस्थानानन्तरञ्जनप्रियः सोऽर्जुनः कलहंसाः मेखला इवेत्युपमितसमासः । अन्यत्र कलहंसा इव ताइति विशेषणसमासः । कूजन्ती कलहंसमेखला यस्यास्ताम् । सह पाकेन वर्त्तन्तइति सपाकानि शस्यानि तैः शस्यैराहितः सम्पादितः पाण्डुतैव गुणोयस्यास्ताम्भुवमासादितयौवनाम्प्राप्तयौवनाम्प्रियामिव उपजनञ्जनसमीपेऽन्यत्र सखीसमक्षम् । समीपार्थेऽव्ययीभावः । उपाससादोपगतवान् । उपमालङ्कारः ॥ १ ॥

विनम्रेति । सोऽर्जुनोविनम्रशालिप्रसवौघशालिनीरवनतकलमफलस्तोमशोभिनीरपेतपङ्काः निष्पङ्काः ससरोरुहाण्यम्भांसि यासुतास्तथोक्ताः । उपायनीभूता अर्जुनस्त्युपहारीभूताः शरद्गुणश्रियः पूर्वोक्तशरद्धर्मसम-

ननन्द पश्यन्नुपसीम स स्थली-
रुपायनीभूतशरद्गुणश्रियः ॥ २
निरीक्ष्यमाणा इव विस्मयाकुलैः
सरोभिरुन्मीलितपद्मलोचनैः ।
हृतप्रियादृष्टिविलासविभ्रमा
मनोऽस्य जह्रुः शफरीविवृत्तयः ॥ ३ ॥

टीयासु ताः उपसीम ग्रामसीमासु । विभक्त्यर्थेऽव्ययीभावः समासान्तविधेरनित्यत्वादनच्चेति समासान्तो न भवति । केचित्तु अप्यन्येषां कठिनवपुषां दुर्गसे ग्रामसीम्नीत्यादौ नपुंसकप्रयोगदर्शनान्नपुंसकादन्यतरस्यामिति विकल्पाच्च साधुरित्याहुः । स्थलीरकृत्रिमाभुवः । जानपदेत्यादिना अकृत्रिमार्थे ङीष् । पश्यन्ननन्द जहर्ष । अत्र शरद्गुणेषु तादात्म्येनारोप्यमाणस्योपायनस्य प्रकृतेर्नन्दनक्रियोपयोगित्वात्परिणामालङ्कारः ॥ २ ॥

निरीक्ष्यमाणा इति । विस्मयाकुलैराश्चर्यसमाविष्टैरत एवोन्मीलितानि पद्मान्येव लोचनानि येषान्तैः सरोभिर्निरीक्ष्यमाना इव स्थिताः हृतः प्रियादृष्टिविलासानां विभ्रमः शोभा याभिस्तास्तथोक्ता इति मनोहरत्वहेतूक्तिः । विभ्रमः संशये भ्रान्तौ शोभायाञ्चेति वैजयन्ती । शफरीविवृत्तयः प्रोष्ठीस्फुरितान्यास्यार्जुनस्य मनो जह्रुः ॥ ३ ॥

तुतोषेति । सोऽर्जुनः सवारिजे साम्बुजे वारिणि

तुतोष पश्यन् कलमस्य सोऽधिकं
सवारिजे वारिणि रामणीयकम् ।
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे ॥ ४ ॥

नुनोद तस्य स्थलपद्मिनीगतं
वितर्कमाविष्कृतफेनसन्तति ।
अवाप्तकिञ्जल्कविभेदमुच्चकै-
र्विवृत्तपाठीनपराहतम्पयः ॥ ५ ॥

कलमस्य शालिविशेषस्य । शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमीत्यमरः । रमणीयस्य भावो रामणीयकम् । योपधाद्गुरूपोत्तमाद्वुञ् । तत्पश्यन्नधिकं तुतोष । अनुरूपसङ्गमादिति भावः । तथाहि सुदुर्लभेऽनुरूपसङ्गमे योग्यसमागमे लब्धे सतीति शेषः प्रकर्षलक्ष्मीं योग्यसमागमनिमित्तामुत्कर्षसम्पदमभिनन्दितुं कोऽपि नार्हति सर्वोऽप्यभिनन्दत्येवेत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४ ॥

नुनोदेति । आविष्कृता प्रकटीकृता फेनसन्ततिर्डिण्डीरसमूहो यस्य तत्तथोक्तम् । डिण्डीरोऽब्धिकफः फेन इत्यमरः । अवाप्तः किञ्जल्कविभेदः केसरापगमो येन तत्तथोक्तम् । उच्चकैरुच्चकं यथा तथा विवृत्तेन लुठितेन पाठीनेन मत्स्यविशेषेण पराहतन्ताडितम् । सहस्रदंष्ट्रः

क्षतोर्म्मिरेखं शिथिलत्वमायता
शनैः शनैः शान्तरयेण वारिणा।
निरीक्ष्य रेमे स समुद्रयोषिता
न्तरङ्गितं क्षौमविपाण्डु सैकतम्॥ ६॥
मनोरमम्प्रापितमन्तरं भ्रुवो
रलङ्कृतं केसररेणुनाऽणुना।

पाठीनइत्यमरः। पयः कर्त्तृ तस्यार्ज्जुनस्य स्थलपद्मिनीगतन्तङ्गोचरमित्यर्थः वितर्कं संशयं नुनोद चिच्छेद। पाठीनपराहत्या किञ्जल्कपायेन जलदर्शनात् स्थलपद्मिनीशङ्का निवृत्तेत्यर्थः। अत्र निश्चयोत्तरसन्देहालङ्कारः॥ ५॥

क्षतेति। सोऽर्ज्जुनः शिथिलत्वमायता गच्छता दिने दिने क्षीयमाणेनेत्यर्थः। अतएव शनैः शनैः शान्तरयेण अन्ययोर्म्मिरेखानुदयादिति भावः वारिणा क्षताः ऊर्म्मयः तरङ्गाएव रेखाराजयोयस्य तत्तथोक्तन्तरङ्गा अस्य सञ्जातास्तरङ्गितम्भङ्गिमत्। तदस्य सञ्जातमिति इतच्। यत्क्षौमन्दुकूलन्तद्वद्विपाण्डु शुभ्रमित्युपमालङ्कारः। समुद्रयोषितान्नदीनां सिकताऽस्यास्तीति सैकतम्पुलिनम्। सिकताशर्कराभ्याञ्चेत्यण्प्रत्ययः। तोयोत्थितन्तत्पुलिनं सैकतं सिकतामयमित्यमरः। निरीक्ष्य रेमे तुतोष॥ ६॥

ततस्त्रिभिः शालिगोप्त्रीं वर्णयति। मनोरममिति। अणुना सूक्ष्मेण केसरेषु किञ्जल्केषु। किञ्जल्कः केसरो-

अलक्तताम्राधरपल्लवश्रियां
समानयन्तीमिव बन्धुजीवकम् ॥ ७ ॥
नवातपालोहितमाहितं मुहु-
र्महानिवेशौ परितः पयोधरौ ।
चकासयन्तीमरविन्दजं रजः
परिश्रमाम्भः पुलकेन सर्पता ॥ ८ ॥

ऽस्त्रियामित्यमरः । योरेणुः परागस्तेनालङ्कृतमतएव मनोरमयतीति मनोरमम् । कर्म्मण्यणित्यण् । भ्रुवोरन्तरं प्रापितं भ्रूमध्ये निवेशितम्बन्धुजीवकं बन्धूकपुष्पम् । बन्धूकोबन्धुजीवकमित्यमरः । अलक्तताम्रस्य लाक्षारागरक्तस्य अधरपल्लवस्य श्रिया शोभया समानयन्तीं समीकुर्व्वन्तीमिव साम्यपरीक्षां कुर्व्वतीमिवेत्यर्थः । उत्प्रेक्षालङ्कारः ॥ ७ ॥

नवेति । महान्निवेशः स्थानं ययोस्तौ महानिवेशौ पीवरावित्यर्थः । ययोवरौ परितः स्तनयोः समन्तादित्यर्थः । अभितःपरितः समयानिकषाहाप्रतियोगेऽपीति द्वितीया । मुहुराहितन्निःक्षिप्तं नवातपालोहितं बालातपताम्रमरविन्दजं रजः परागं सर्पता प्रसरता परिश्रमाम्भः पुलकेन स्वेदोद्भवेन पुलकेन चकासयन्तीं शोभयन्तीम् । चकास्तेर्ण्यन्ताच्छतरि ङीप् । अलङ्करणङ्कुर्व्वतीं तत्रापि विकृततेति भावः ॥ ८ ॥

कपोलसंश्लेषि विलोचनत्विषा
विभूषयन्तीमवतंसकोत्पलम् ।
सुतेन पाण्डोः कलमस्य गोपिकां
निरीक्ष्य मेने शरदः कृतार्थता ॥ ९ ॥
विशेषकम् ॥

उपारताः पश्चिमरात्रिगोचरा
दपारयन्तः पतितुं जवेन गाम् ।

कपोलेति । पुनः कपोलसंश्लेषि यदवतंसकोत्पलं कर्णोत्पलन्तद्विलोचनत्विषा विभूषयन्तीम् आभरणस्यापि आभरणमिति भावः । कलमं गोपायतीति गोपिकां शालिगोप्त्रीं ण्वुल्प्रत्ययः ॥ निरीक्ष्य पाण्डोः सुतेनार्ज्जुनेन शरदः कृतार्थताभावः कृतार्थतासाफल्यं शरदः स्वगुणसम्पत्सिद्धिविनियोगलाभादिति भावः । त्वतलोर्गुणवचनस्य पुंवद्भावोवक्तव्यः । मेनेऽमानि । मन्यतेः कर्म्मणि लिट् ॥ ९॥

उपारताइति । पश्चिमा चाऽसौ रात्रिश्चेति विशेषणसमासः अपररात्रइत्यर्थः पूर्व्वा दिक् पश्चिमं नभइत्यादिवत् एकदेशि शब्दस्यैकदेशशब्दसामानाधिकरण्यादेकदेशि पर्य्यवसानन्नतु पश्चिमं रात्रेरित्येकदेशिसमासः । तद्विधायके पूर्व्वापरादिसूत्रे पश्चिमशब्दाग्रहणादतएव अहः सर्व्वैकदेशेत्यादिना न समासान्तोऽपि तस्यापि पूर्व्वापरादिसूत्रोक्तसमासविषयत्वादिति । सकाशवर्णस्यैकदेशि-

तमुत्सुकाश्चक्रुरवेक्षणोत्सुक-
ङ्गवां गणाः प्रस्नुतपीवरोधसः ॥ १० ॥
परीतमुक्षावजये जयश्रिया
नदन्तमुच्चैः क्षतसिन्धुरोधसम् ।
ददर्श पुष्टिन्दधतं स शारदीं
सविग्रहन्दर्पमिवाधिपङ्गवाम् ॥ ११ ॥

समासमेवाश्रित्य समासान्तमाह तन्त्र्यम् । गावश्चरन्त्यत्रेति गोचरो गवामधिष्ठानं वनं पश्चिमरात्रौ यो गोचरस्तस्मादुपारताः सन्निवृत्ताः जवेन गामभ्युपेतितुन्याविदुग्धपारधन्तोऽप्यकुर्वन्तः प्रस्नुतपीवरोधसो वत्सस्मरात् स्रवत्क्षीराः । ऊधस्तु क्लीबमापीनमित्यमरः । ऊधसोऽनङिति स्त्रीग्रहणं कर्तव्यमिति नियमान्नानङादेशः । उत्सुकाः वत्सेषूत्कण्ठिता गवां गणास्तमर्जुनमवेक्षणोत्सुकन्दर्शनलालसं चक्रुः । स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले लक्ष्यदृष्ट्या स्त्रियां पुंसि गौरित्युभयत्राप्यमरः । अत्र स्वभावोक्तिरलङ्कारः । स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनमिति लक्षणात् ॥ १० ॥

परीतमिति । सोऽर्जुनः उक्षावजये उक्षान्तरभङ्गे सति जयश्रिया परीतं वेष्टितमुच्चैर्नदन्तं क्षतसिन्धुरोधसं क्षुण्णसरित्तटं शरदि भवां शारदीं पुष्टिमवयवोपचयन्दधतं गवामधिपं महोक्षं सविग्रहं मूर्तिमन्तम् । कायो-

विमुच्यमानैरपि तस्य मन्थरं
गवां हिमानीविशदैः कदम्बकैः ।
शरन्नदीनाम्पुलिनैः कुतूहलं
गलद्दुकूलैर्ज्जघनैरिवादधे ॥ १२ ॥
गतान्पशूनां सहजन्मबन्धुतां
गृहाश्रयम्प्रेम वनेषु बिभ्रतः ।

देहः क्लीबपुंसोः शरीरं वर्ष्म विग्रह इत्यमरः । दर्पमिवेत्युत्प्रेक्षा । ददर्श ॥ ११ ॥

विमुच्यमानैरिति । हिमानीविशदैर्हिमसङ्घातशुभ्रैः । हिमानी हिमसंहतिरित्यमरः । इन्द्रवरुणेत्यादिना ङीष् । तत्सन्नियोगादानुगागमश्च । गवां कदम्बकैः कर्तृभिः । कदम्बकं समूहे श्रीफले पुष्पविशेषके इत्यमरः । मन्थरं मन्दं विमुच्यमानैरपि किमुताविमुच्यमानैरिति भावः । शरन्नदीनां सम्बन्धिभिः । शरद्ग्रहणाप्प्राङ्मग्नत्वमस्तीत्यर्थः । अत्र पुलिनादर्शनादिति भावः । पुलिनैः कर्तृभिर्गलद्दुकूलैर्ज्जघनैरिव तस्यार्ज्जुनस्य कुतूहलङ्कौतुकमादधे आहितम् ॥ १२ ॥

गतानिति । पाण्डवोऽर्ज्जुनः पशूनाङ्गवां सह जन्म येषां ते सहजन्मानः सोदरास्तएव बन्धवस्तेषां भावस्तत्ता ताङ्गतान् पशुषु सोदराभिमानवत इत्यर्थः । गृहाश्रयं गृहविषयम्प्रेम वनेषु बिभ्रतः वनेषु गृहाभिमानिन इत्यर्थः । आर्ज्जवे ऋजुत्वे विधेयत्वे गोभिः पशुभिः कृतानु-

दर्दर्श गोपानुपधेनु पाण्डवः
कृतानुकारानिव गोभिरार्ज्जवे ॥ १३ ॥
परिभ्रमन्मूर्द्धजषट्पदाकुलैः
स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितै-
र्नवातपामृष्टसरोजचारुभिः ॥ १४ ॥

कारानुकृतावस्थितानित्युत्प्रेक्षा । ततोविधेयानित्यर्थः । गाः पातीति गोपाः गोपालकाः । आतोऽनुपसर्गे कइति कप्रत्ययः । तानुपधेनु धेनुसमीपे । समीपार्थेऽव्ययीभावः । ददर्श । अत्रोत्प्रेक्षानुप्राणिता स्वभावोक्तिरलङ्कारः ॥१३॥

अथ चतुर्भिर्व्वल्लवीर्नर्त्तकीसाम्येन वर्णयति । परिभ्रमदिति । मूर्द्धजाः षट्पदाइवेत्युपमितसमासः । सरोजचारुभिरित्युपमानुसारात् । परिभ्रमद्भिश्चलद्भिर्मूर्द्धजैः षट्पदैराकुलानि तैः दन्ताः केसरा इवेति पूर्व्ववत्समासः। स्मितोदयेनादर्शिता ईषत्प्रकाशिताः दन्तकेसरा येषान्तै-स्तथोक्तैश्चलत्कुण्डलरश्मिरञ्जितैश्चञ्चत्कनककर्णवेष्टनप्रभा-नुलिप्तैरतएव नवातपामृष्टैर्बालातपस्पृष्टं यत्सरोजन्त-द्वच्चारुभिर्मुखैरुपलक्षिताः ॥ १४ ॥

निबद्धेति । निबद्धेनानुबद्धेन निःश्वासेन विकम्पिता अधरा यासान्तास्तथोक्ताः अतएव प्रस्फुरितैकपल्लवाः प्रचलितैकपल्लवाइत्यर्थः । क्वचित्प्रकृष्याप्रवृत्तस्य दृष्टिविषये

निबद्धनिःश्वासविकम्पिताधरा
लता इव प्रस्फुरितैकपल्लवाः ।
व्यपोढपार्श्वैरपवर्त्तितत्रिका
विकर्षणैः पाणिविहारहारिभिः ॥ १५ ॥
व्रजाजिरेष्वम्बुदनादशङ्किनीः
शिखण्डिनामुन्मदयत्सु योषितः ।

वीप्सार्थत्वं सप्तपर्णादिवदिति कैयटः एकैकपल्लवस्फुरणस्यापि लोके सम्भवात् । लता इव स्थिता इत्युपमैवेयं नोत्प्रेक्षा किञ्च व्यपोढानि विपरीतानि पार्श्वानि येषु तैः पाणिविहारहारिभिः पाणिविक्षेपमनोहरैः । अपहारोऽङ्गविक्षेप इत्यमरः । विकर्षणैस्तस्यगुणाकर्षणैरपवर्त्तितत्रिकाः सञ्चलितनितम्बाः । यद्यपि पृष्ठवंशाधो त्रिकमित्यमरः तथाप्यत्र नितम्बो लक्ष्यते तन्नकश्चादि भावः ॥ १५ ॥

व्रजेति । व्रजाजिरेषु गोष्ठप्राङ्गणेषु । अधिकरणे सप्तमी । व्रजोगोष्ठाध्ववृन्देष्विति विश्वः । अम्बुदनादशङ्किनीर्गर्जितभ्रमवतीरिति भ्रान्तिमदलङ्कारः । शिखण्डिनां योषितोमयूरीः योषिद्ग्रहणं मौग्ध्यातिशयार्थम् । उन्मदयत्सु उन्मदाः कुर्वत्सु । तत्करोतीति ण्यन्ताच्छतृप्रत्ययः । मथाम्भ्यनदण्डानाम् । वैशाखमन्थमन्थानमन्थानोमन्थदण्डक इत्यमरः । विवर्त्तनैः परिभ्रमणैः मुहुः प्रगुन्नेषु कम्पितेष्विति स्वभावोक्तिः । कुम्भेषु

मुहुः प्रणुन्नेषु मथां विवर्त्तनै
र्नदत्सु कुम्भेषु मृदङ्गमन्थरम्। १६॥
स मन्थरावल्गितपीवरस्तनीः
परिश्रमक्लान्तविलोचनोत्पलाः।
निरीक्षितुन्नोपरराम बल्लवी
रभिप्रनृत्ता इव वारयोषितः॥१७। कु०

कलशेषु मृदङ्गवन्मन्थरम् ईषन्नदत्सु स्वनवत्सु सत्सु इति नाथ्यसाध्योक्तिः। भावलक्षणे सप्तमीयम्॥ १६॥

सइति। मन्थरं मन्दमावल्गिताश्चञ्चलाः पीवराः स्तना यासान्तास्तथोक्ताः। स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति ङीष्। परिश्रमेण क्लान्तानि म्लानानि विलोचनोत्पलानि यासान्तास्तथोक्ताः बल्लवीर्गोपीः। गोपेगोपालगोसङ्ख्यगोधुगाभीरबल्लवा इत्यमरः। अभिप्रनृत्ता नृत्यन्तीः। गत्यर्थाकर्म्मकेत्यादिना कर्त्तरि क्तः गतिबुद्धिप्रत्यवसानार्थेत्यादि चकाराद्वर्त्तमानार्थम्। वारयोषितोवेश्या इव। वारस्त्रीगणिकावेश्या इत्यमरः। सोऽर्ज्जुनोनिरीक्षितुमीक्षितेस्तुमुन्। नोपरराम न विरमति स्म। व्याङ्परिभ्योरमइति परस्मैपदम्। अत्र चतुःश्लोक्यामुपमास्वभावत्योः संसृष्टिः॥ १७॥

पपातेति। सोऽर्ज्जुनः पूर्व्वां प्राक्प्रेक्षणीयां विजिह्मतां वक्रताञ्जहतस्त्यजतः। शरदि निष्पङ्कत्वेन समरेखयैव

पपात पूर्वां जहतो विजिह्मतां
वृषोपभुक्तान्तिकसस्यसम्पदः ।
रथाङ्गसीमन्तितसान्द्रकर्द्दमान्
प्रसक्तसम्पातपृथक्कृतान् पथः ॥ १८ ॥
जनैरुपग्राममनिन्द्यकर्म्मभि
र्विविक्तभावेङ्गितभूषणैर्वृताः ।
भृशं ददर्शाश्रममण्डपोपमाः
सपुष्पहासाः स निवेशवीरुधः ॥ १९ ॥

सुगमत्वादिति भावः । जहातेः शतृप्रत्ययः । वृषोपभुक्तान्तिकसस्यसम्पदः वृषभचर्वितप्रान्तसस्यरुद्धीन् । सुकृते वृषभे वृषइत्यमरः । सीमन्ताइव सीमन्ताश्चक्राङ्गपद्धतयः सीमन्तवन्तः कृताः सीमन्तिताः । मत्वन्तात्तत्करोतीति णिचि क्तः णाविष्टवद्भावान्मतुपोलुक् । रथाङ्गैश्चक्रैः सीमन्तिताः सान्द्राः कर्दमा घनीभूताः पङ्कायेषु तान् प्रसक्तसम्पातेन सन्ततसञ्चारेण पृथक्कृतान् पथोमार्गान् पपात जगामेति स्वभावोक्तिः ॥ १८ ॥

जनैरिति । सोऽर्ज्जुनः उपग्रामं ग्रामेषु विभक्त्यर्थेऽव्ययीभावः । अनिन्द्यकर्म्मभिरनिषिद्धवृत्तिभिः वृत्तिश्चैकत्र कृष्यादिरन्यत्र शिलोञ्छादिः विविक्तान्येकाग्राणि भावोऽभिप्रायः इङ्गितञ्चेष्टा भूषणमलङ्कारश्च येषान्तैस्तथोक्तैर्जनैर्वृता अधिष्ठिता इत्यर्थः । अतएवाश्रमेषु मुनिस्थानेषु ये मण्डपाः तदुपमाः । मण्डपोऽस्त्री जनाश्रय इत्य-

ततः स सम्प्रेक्ष्य शरद्गुणश्रियं
शरद्गुणालोकनलोलचक्षुषम् ।
उवाच यक्षस्तमनोदितोऽपिगां
न हीङ्गितज्ञोऽवसरेऽवसीदति ॥ २० ॥
इयं शिवायानियतेरिवायतिः
कृतार्थयन्ती जगतः फलैः क्रियाः ॥

मरः । सपुष्पहासाः पुष्पविकाससहिताः । तेन सहे-
त्यादिना बहुब्रीहिः । निवेशवीरुधोऽटहगुल्मिनीः वीरुधो-
वल्लिगुल्मिन्याविति वैजयन्ती । अत्र साहरन्दर्श उपमा-
लङ्कारः ॥ १९ ॥

तत इति । ततः स पूर्वोक्तोयक्षः शरद्गुणश्रियं सम्प्रेक्ष्य
दर्शनीयां वर्णनीयाञ्च विचार्य्येत्यर्थः । शरद्गुणालोकने
लोलचक्षुषं सतृष्णदृष्टिम् । लोलश्चलसतृष्णयोरित्यमर. ।
तमर्ज्जुनमनोदितोऽप्यपृष्टोऽपि गां वाचमुवाच । तथाहि
इङ्गितज्ञोभावज्ञः । इङ्गितं हृद्गतोभावइति विश्वः । अव-
सरे उक्तियोग्ये काले नावसीदति न वाचं यच्छति ।
नापृष्टः कस्यचिद्ब्रूयादिति निषेधस्त्वनाकाङ्क्षितोक्तिविषय
इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तर-
न्यासः ॥ २० ॥

इयमिति । हे पार्थ शिवायाः कल्याणकारिण्याः
नियतेः दैवन्दिष्टम्भागधेयं भाग्यं स्त्री नियतिर्विधिरित्य-
मरः । शुभावहदैवस्यायतिः फलदानकालः सेव जगतः

जयश्रियं पार्थ पृथूकरोतु ते
शरत्प्रसन्नाम्बुरनम्बुवारिदा ॥ २१ ॥
उपैति सस्यं परिणामरम्यता
नदीरनौद्धत्यमपङ्कता महीम् ।
नवैर्गुणैः सम्प्रति संस्तवस्थिर
न्तिरोहितम्प्रेम घनागमश्रियः ॥ २२

क्रियाः कृष्यादिकर्माणि फलैर्लाभैः । लाभनिष्पत्तियोगेषु बीजभावे धने फलमिति वैजयन्ती । कृतार्थयन्ती सफलयन्ती प्रसन्नाम्बुर्निर्मलोदका अनम्बुवारिदा निर्जलमेघा अनेन विशेषणद्वयेन द्यावापृथिव्योरानुकूल्यं सूचयति । इयं शरत्ते जयश्रियं पृथूकरोतु । आशीरर्थे लोट् ॥ २१ ॥

उपैतीति । सस्यं व्रीह्यादिकम्परिणामेन परिपाकेन रम्यतामुपैति । नदीरनौद्धत्यं गम्यरूपत्वमुपैति । महीमपङ्कता निष्पङ्कत्वमुपैति । तथाहि । सम्प्रति नवैर्गुणैः पर्वोक्तैः शरद्धर्मैः संस्तवेन परिचयेन स्थिरं दृढमपि घनागमश्रियः प्रावृड्लक्ष्म्याः सम्बन्धि तद्विषयमित्यर्थः प्रेम तिरोहितन्निरर्थकं कृतमित्यर्थः । गुणवत्स्याः प्रेमाणो न परिचयतन्त्रा इति भावः । वास्तवालङ्कारः ॥ २२ ॥

पतन्तीति । अस्मिन्नभसि विहगाः पतत्रिणो बलाका नपतन्ति न प्रसरन्ति धृतेन्द्रचापाः पयोदपङ्क्तयश्च न पतन्ति । तथापि श्रीकारणाभावेऽपि नभः परां श्रिय

पतन्ति नास्मिन् विशदाः पतत्रिणो
धृतेन्द्रचापा न पयोदपङ्क्तयः।
तथापि पुष्णाति नभः श्रियम्परां
न रम्यमाहार्य्यमपेक्षते गुणम्॥ २३॥
विपाण्डुभिर्म्लानतया पयोधरैः
च्युताचिराभागुणहेमदामभिः।
इयङ्कदम्बानिलभर्त्तुरत्यये
न दिग्वधूनां कृशता न राजते॥ २४॥

प्नोत्यभ्युन्नाति। तथाहि रम्यं स्वभावसुन्दरं वस्तु आहा-
र्य्यमारोप्यमाणं गुणन्नापेक्षते। तत्र स्वभावस्यैव समर्थत्वा-
दिति भावः। अर्थान्तरन्यासः॥ २३॥

विपाण्डुभिरिति। कदम्बानिलशब्देन वर्षर्तुरुपलक्ष्यते
सएव भर्त्ता तस्यात्यये विरहे म्लानतया निर्जलतया
दुर्बलतया च विपाण्डुभिः च्युतानि अचिराभा विद्युत्तस्या
गुणाएव हेमदामानि सुवर्णसूत्राभरणानि येभ्यस्तैः पयो-
धररम्बादैरन्यत्र स्तनैरुपलक्षितानाम्। स्तनाम्भोदौ पयो-
धराविति वैजयन्ती। दिशएव वध्वस्तासामियं कृशता
न राजतइति न किन्तु राजतएव भर्तृवियुक्तत्वात्। आ-
र्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशेति स्मरणादिति
भावः। सामान्यतः प्रसक्तमरञ्जनं सञ्चार्य्यस्यैकेन नञा-
नद्य द्वितीयेन निषेधति। यथाह वामनः। सम्भाव्यनि-

विहाय वाञ्छामुदिते मदात्यया
दरक्तकण्ठस्य रुते शिखण्डिनः ।
श्रुतिः श्रयत्युन्मदहंसनिःस्वनं
गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥ २५ ॥
अमी पृथुस्तम्बभृतः पिशङ्गतां
गता विपाकेन फलस्य शालयः ।

षेधनिवर्त्तने द्वौ प्रतिषेधाविति । अत्र रूपकालङ्कारः स्फुट एव ॥ २४ ॥

विहायेति । मदात्ययात् मदक्षयाद्दरक्तकण्ठस्य अव्यक्तस्वरस्य कण्ठशब्देनात्र तद्गतः स्वरोलक्ष्यते शिखण्डिनो-मयूरस्य सम्बन्धिनि उदिते उच्चैस्तरे रुते कूजिते वाञ्छां विहाय श्रुतिः श्रोत्रम् । कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवहृत्यमरः । उन्मदहंसनिःस्वनं मत्तमरालकूजितं श्रयति भजते । नन्वकाण्डे परिचितपरिहारेणापरिचिते कथं प्रीत्युदयइत्याशङ्कार्थान्तरं न्यस्यति । गुणाइति । प्रीणातीति प्रियः । इगुपधज्ञाप्रीकिरः कइति कप्रत्ययः । प्रियत्वे प्रीतिकरणे गुणा अधिकृतानियुक्ताः संस्तवः परिचयोनाधिकृतः न समर्थः प्रेमाधाने गुणवत्त्वमप्रयोज-कमपरिचयइत्यर्थः ॥ २५ ॥

अमीति । अमी पृथून् स्तम्बान् गुच्छान् बिभ्रतीति पृथुस्तम्बभृतः । स्तम्बोगुच्छस्तृणादिनइत्यमरः । फलस्य प्रसवस्यविपाकेन परिणामेन पिशङ्गताङ्गताः शालयः व्रीहि-

विकासि वप्राम्भसि गन्धसूचित
न्नमन्ति निघ्रातुमिवासितोत्पलम् ॥ २६॥
मृणालिनीनामनुरञ्जितं त्विषा
विभिन्नमम्भोजपलाशशोभया ।
पयः स्फुरच्छालिशिखापिशङ्गित-
न्द्रुतन्धनुष्खण्डमिवाहिविद्विषः ॥ २७

विशेषाः। वप्राम्भसि केदारोदके। पुन्नपुंसकयोर्व्वप्रः केदारः क्षेत्रमित्यमरः। विकसतीति विकासि विकसितं गन्धेन सूचितं ज्ञापितमसितोत्पलन्निघ्रातुमिव नमन्ति। निध्यातुमिवेति पाठे द्रष्टुमित्यर्थः। निर्व्वर्णयितुं वा। निर्व्वर्णनन्तु निध्यानन्दर्शनालोचनेक्षणमित्यमरः। अत्र फलभारान्नमनस्य निघ्राणफलकत्वमुत्प्रेक्ष्यत इति फलोत्प्रेक्षा ॥ २६ ॥

अथ चतुर्भिः कलापकमाह। मृणालिनीनामिति। मृणालिनीनाम्पद्मलतानान्त्विषा हरितवर्णेन अनुरञ्जितन्तद्वर्णतामापादितमित्यर्थः। तथाऽम्भोजपलाशशोभया पद्मदलकान्त्या आरुण्येनेत्यर्थः। विभिन्नं मिश्रितम्। तथा स्फुरच्छालिशिखापिशङ्गितं स्फुरद्भिः कलमाग्रैः पिङ्गलीकृतमित्थं नानावर्णत्वात् द्रुतं विगलितमहिविद्विषोवृत्रशत्रोरिन्द्रस्य। सर्पे वृत्रासुरेऽप्यहिरिति वैजयन्ती। धनुष्खण्डमिव स्थितम्। नित्यं समासेऽनुत्तरपदस्थस्येति विसर्जनीयस्य षत्वम्। पयोवप्राम्भोऽपदिश्य व्याजीकृत्य धारता-

विपाण्डु संव्यानमिवानिलोद्धतं
निरुन्धतीः सप्तपलाशजं रजः ।
अनाविलोन्मीलितबाणचक्षुषः
सपुष्पहासा वनराजियोषितः ॥ २८ ॥

मित्यागामिना सम्बन्धः । अत्र धनुष्खण्डस्य च्युतस्य लोकेऽप्रसिद्धत्वादुत्प्रेक्षेयं नोपमा ॥ २७ ॥

विपाण्ड्विति । विपाण्डु शुभ्रमनिलोद्धतमनिलोत्क्षिप्तं सप्त सप्तपलाशानि पर्णानि पर्वसु येषान्ते वृक्षाः सप्तपलाशाः । क्वचित् सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्तम् । तेषाम्पुष्पाणि सप्तपलाशानि । द्विहीनम्प्रसवे सर्व्वमित्यमरः । फले लुगित्यणो लुक् । तेषु जातं सप्तपलाशजं रजः परागं संव्यानमुत्तरीयमिव । संव्यानमुत्तरीयञ्चेत्यमरः । निरुन्धतीर्निवारयन्तीः प्रावृतवतीरिति यावत् । अनाविलान्यकलुषाणि उन्मीलितानि च बाणानि नीलसैरेयकाणि चक्षूंषीव यासान्तास्तथोक्ताः । नीलस्वर्णगलोदासीबाणश्चोदनपाक्यपीति धन्वन्तरिः । पुष्पाणि हासा इव तैः सह वर्त्तन्त इति सपुष्पहासाः वनराजयो योषित इव वनराजियोषितः ता अपदिश्येत्यन्वयः । अत्र संव्यानमिवेत्युपमैव अन्यत्रोपमितसमासेलिङ्गम् । यथा काचित् केनचित्कामुकेनाच्छिन्नं स्तनांशुकं निरुन्धे तद्वदिति भावः ॥ २८ ॥

अदीपितं वैद्युतजातवेदसा
सिताम्बुदच्छेदतिरोहितातपम् ।
ततान्तरं सान्तरवारिशीकरैः
शिवं नभोवर्त्म सरोजवायुभिः ॥२९॥

सितच्छदानामपदिश्य धावतां
रुतैरमीषां ग्रथिताः पतत्रिणाम् ।
प्रकुर्व्वते वारिदरोधनिर्गताः
परस्परालापमिवामला दिशः ॥ ३० ॥

कलापकम्

अदीपितमिति । वैद्युतजातवेदसा वैद्युताग्निना अदीपितमप्रकाशितं विद्युत्प्रकाशस्य वृष्टिविघातकत्वाद्राहित्यं गुणइति भावः । सिताम्बुदानाञ्छेदैः खण्डैः तिरोहितातपम् । न वृष्टिबाधो नाप्यातपबाधइति भावः । सान्तरवारिशीकरैः विरलाम्बुकणैस्ततान्तरं व्याप्तमध्यं सरोजवायुभिः शिवं रम्यं नभोवर्त्म चापदिश्येति । स्वभावोक्तिरलङ्कारः ॥ २९ ॥

सितेति । अपदिश्य धावतामिति पूर्वश्लोकगतयोरन्वयः प्रभृतिकमुद्दिश्य धावताममीषां सितच्छदानाम्पतत्रिणां हंसानाम् । हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसइत्यमरः । रुतैः शब्दैर्ग्रथिताः दृब्धाः । ग्रथितं गुम्फितं दृब्धमित्यमरः । वारिदरोधनिर्गता मेघपरोधनिर्गताः अतएव-

विहारभूमेरभिघोषमुत्सुकाः
शरीरजेभ्यश्च्युतयूथपङ्क्तयः।
असक्तमूधांसि पयः क्षरन्त्यमू-
रुपायनानीव नयन्ति धेनवः॥ ३१॥

वामालाः प्रसन्नाः दिशः परस्परालापं प्रकुर्व्वतइव दिष्टया मेघोपरोधनिर्मुक्ताश्चिरादुच्छ्वसितादृति हंसकूजितव्याजेन परस्परमालपन्तीत्युत्प्रेक्षा॥ ३०॥

विहारेति। विहारभूमेरपरराचगोचरादित्यर्थः। आगच्छन्त्यइतिशेषः। अभिघोषमुत्सुकाः व्रजम्प्रत्युत्कण्ठिताः वत्सप्रेम्णेति भावः। घोषआभीरपल्ली स्यादित्यमरः। च्युता त्रुटिता यूथानां कुलानाम्पङ्क्तिः श्रेणीर्याभ्योयासान्ताश्चघोक्ताः। सजातीयैः कुलं यूथमित्यमरः। अमूः धेनवोऽसक्तमप्रतिबन्धम्पयः क्षीरं क्षरन्ति स्रवन्ति वत्सस्मरणात्प्रस्रवन्तीत्यर्थः। क्षरतेः शतृप्रत्ययः। ऊधांसि शरीरजेभ्योऽपत्येभ्यउपायनानीव। हितोपकारिणीवेत्युत्प्रेक्षा नयन्ति प्रापयन्ति। यथा लोके कुतश्चित्प्रवासादेत्य मातरः किञ्चित् खाद्यमानयन्ति तद्वदिति भावः॥३१॥

जगदिति। जगत्प्रसूतिर्जगत्कारणमाज्यादिहविर्द्वारेणेति भावः। जगतामेकपावनी मुख्यशोधनी व्रजोपकण्ठं गोष्ठान्तिकम्। दूरान्तिकार्थेभ्योद्वितीया चेति द्वितीया। उपकण्ठान्तिकाभ्यर्णाभ्यग्राद्यमरः। तनयैः कं सैरुपेयुषी सङ्गता। उपेयिवाननाश्वाननूचानश्चेति

जगत्प्रसूतिर्जगदेकपावनी
व्रजोपकण्ठन्तनयैरुपेयुषी ।
द्युतिं समग्रां समितिर्गवामसा
वुपैति मन्त्रैरिव संहिताहुतिः ॥ ३२ ॥
कृतावधानञ्जितवर्हिणध्वनौ
सुरक्तगोपीजनगीतनिःस्वने ।

क्तप्रत्ययान्तोनिपातः । उगितश्चेति ङीप्। असौ गवां समितिः संहतिः। मन्त्रैर्ऋग्यजुषादिभिः। मन्त्रोऋगादि-ग्लोक्तिरिति वैजयन्ती। संहिता योजिता आहुतिरिव समग्रां द्युतिमुपैति। आहुतिरपि जगत्प्रसूतिर्ज्जगदेक-पावनी च। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नन्ततः प्रजा इति स्मरणादिति भावः ॥ ३२ ॥

कृतेति। जितवर्हिणध्वनौ केकानुकारिणीत्यर्थः। एतेन षड्जस्वरप्रायङ्गायतीति गम्यते । यथाह मातङ्गः । षड्जं मयूरोवदतीति । गाः पान्तीति गोपास्तेषाम्भार्य्या गोप्यः आतोऽनुपसर्गे कइति कप्रत्ययः। पुंयोगादाख्या-यामिति ङीष् । ताएव जनः सुरक्तो मधुरकण्ठोयो-गोपीजनोवल्लवीजनस्तस्य गीतनिःस्वने गाने कृतावधान-मेकाग्रचित्तमिदम्पुरोवर्त्ति क्ष्णीकदम्बकङ्कर्द भूयसीमति

[ १३ ] भार०

इदञ्जिघत्सामपहाय भूयसीं
न शस्यमभ्येति मृगीकदम्बकम् ॥ ३३ ॥

असावनास्थापरयावधीरितः
सरोरुहिण्या शिरसा नमन्नपि ।
उपैति शुष्यन् कलमः सहाम्भसा
मनोभुवा तप्त इवाभिपाण्डुताम् ॥ ३४ ॥

महतीं जिघत्सामत्तुमिच्छाम् । अदः सन्नन्तादप्रत्ययः लुङ्सनोर्घस्लृ इति घसादेशः । अपहाय हित्वा शस्यं नाभ्येति नोपैति । गीतासक्तत्वात् क्षुधामपि न गणयतीत्यर्थः ॥ ३३ ॥

असाविति । शिरसाग्रेण मूर्ध्नाऽवनमन् प्रणमन्नपि अनास्थापरयाऽनादरपरया सरोरुहिण्या अवधीरितोऽवज्ञातः अम्भसा सहचरभूतेनेति भावः । शुष्यन्नसौ कलमः शालिविशेषो मनोभुवा तप्त इव कामार्त इवाभिपाण्डुतामुपैति। अत्रानास्थापरयेति प्रकृतसरोरुहिणीविशेषणसामर्थ्यादप्रस्तुतनायिकाप्रतीतेः समासोक्तिरुत्तिष्ठमानायाः सरोरुहिण्याः प्रतीयमानया नायिकया शुद्धभेदेऽप्यभेदलक्षणातिशयोक्तिमहिम्नाऽवधीरणक्रियासम्बन्धान्निर्वहन्ती। मनोभुवा तप्त इवेत्युत्प्रेक्षानिर्वाहिकेत्यतिशयोक्त्यनुप्राणितसमासोक्त्युपमयोरङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

अमी समुद्धूतसरोजरेणुना
हृताहृतासारकणेन वायुना ।
उपागमे दुश्चरिताइवापदां
गतिन्न निश्चेतुमलं शिलीमुखाः ॥ ३५ ॥

मुखैरसौ विद्रुमभङ्गलोहितैः
शिखाः पिशङ्गीः कलमस्य बिभ्रती ।
शुकावलिर्व्यक्तशिरीषकोमला
धनुःश्रियङ्गोत्रभिदोऽनुगच्छति ॥ ३६ ॥

अमीति । समुद्धूतसरोजरेणुनेति सौरभ्योक्तिः हृतासारकणेनोपात्ताम्बुकणेनेति शैत्योक्तिः । धारासम्पात आसार इत्यमरः । वायुनाहृता आकृष्टा अमी शिलीमुखा भृङ्गाः आपदामुपागमे राजादिभयागमे दुश्चरिता दुष्टकर्माणश्चौरादय इव गम्यत इति गतिङ्गन्तव्यदेशम् । देशोपायगमे गतिरिति वैजयन्ती । निश्चेतुन्नालन्नसमर्थाः एकत्र वायोः सार्वत्रिकत्वेनोपादानादनिश्चयादन्यत्र भयान्धत्वादिति भावः ॥ ३५ ॥

मुखैरिति । विद्रुमभङ्गलोहितैर्मुखैः पिशङ्गीः पिशङ्गवर्णाः कलमस्य शिखाः शाल्यग्राणि बिभ्रती व्यक्तशिरीषकोमला विकसितशिरीषवर्णाऽसौ शुकावलिर्गोत्रभिद इन्द्रस्य धनुषः श्रियमनुगच्छत्यनुकरोति नानावर्णत्वादिन्द्रधनुरिवाभातीत्युपमालङ्कारः ॥ ३६ ॥

इति कथयति तत्र नातिदूरा
दथ ददृशे पिहितोष्णरश्मिबिम्बः ।
विगलितजलभारशुक्लभासा
न्निचय इवाम्बुमुचान्नगाधिराजः ॥ ३७॥

तमतनुवनराजिश्यामितोपत्यकान्त
न्नगमुपरि हिमानीगौरमासाद्य जिष्णुः ।

इतीति । अथ तत्र तस्मिन् पूर्वोक्तं यक्षे इतीत्यङ्कथयति नातिदूरादनतिदूरादीषद्दूरदित्यर्थः । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । पिहितोष्णरश्मिबिम्बस्तिरोहितार्कमण्डल इत्यौन्नत्योक्तिः । नगाधिराजो हिमाद्रिः विगलितो जलभारो येषान्ते तथोक्ताः । अतएव शुक्लभासः द्वयोरन्यतरस्य विशेष्यत्वविवक्षया विशेषणसमासः । तेषां विगलितजलभारशुक्लभासां शुभ्राणामम्बुमुचां निचय इव मेघवृन्दमिव ददृशे दृष्टः ॥ ३७ ॥

तमिति । जिष्णुरर्ज्जुनोऽतनुभिर्महतीभिर्वनराजिभिः श्यामिताः श्यामला उपत्यकान्ता आसन्नभूमिप्रदेशाः यस्य तन्तथोक्तम् । उपत्यकाऽद्रेरासन्ना भूमिरूर्द्ध्वमधित्यकेत्यमरः । उपाधिभ्यान्त्यकन्नासन्नारूढयोरिति त्यकन्प्रत्ययः । उपरि हिमानीभिर्हिमसङ्घातैः गौरं शुभ्रन्नगं हिमाद्रिमासाद्यापगतो निवृत्तो मदरागो मस्य तस्य । अ-

व्यपगतमदरागस्यानुसस्मार लक्ष्मी
मसितमधरवासो बिभ्रतः सीरपाणेः ॥ ३८ ॥

इति श्रीभारविकृतौ किरातार्जुनीये महा-
काव्ये शरद्वर्णनोनाम चतुर्थः सर्गः ॥४॥

सितन्नीलमधरं वासः उत्तरीयं बिभ्रतोऽद्धतवतः सीरं हलम्पाणौ यस्य तस्य सीरपाणेर्हलायुधस्य । हलायुधः नीलाम्बरो रौहिणेयस्तालाङ्को मुषली हली । सङ्कर्षणः सीरपाणिरित्यमरः । सप्तमीविशेषणइति ज्ञापकादृव्य-धिकरणपदो बहुव्रीहिः प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ स्तइति सप्तम्याः परनिपातः । लक्ष्मीं शोभामनुसस्मार स्मृतवान् । अत्र सदृशदर्शनेन सदृशान्तरस्य स्मरणात्-स्मरणालङ्कारः । सदृशं सदृशानुभवाद्यत्र स्मर्यते तत् स्मरणमिति विद्याधरः ॥ ३८ ।

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचि-तायां किरातार्ज्जुनीयव्याख्यायां घण्टापथसमाख्यायां चतुर्थः सर्गः ॥ ४ ॥



# पञ्चमः सर्गः ।

अथ जयाय नु मेरुमहीभृतो
रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं
समुदितं नु विलङ्घयितुन्नभः ॥ १ ॥

अथ हिमवद्वर्णनमारभते तत्र पञ्चदशभिः कुलकमाह । अथेति । अथानन्तरं सोऽर्जुनः मेरुमहीभृतो हेमाद्रेर्जयाय नु जयार्थं वा । नुशब्दोऽत्र वितर्के । नु पृच्छायां वितर्के चेत्यमरः । रभसो वेगः । रभसो वेगहर्षयोरिति वैजयन्ती । तद्वत्या रभसयातीवोत्कटतयेति यावत् । अर्श आदित्वादच्प्रत्ययः । दिगन्तानान्दिदृक्षया नु द्रष्टुमिच्छया वा नभोऽन्तरिक्षं विलङ्घयितुं नु अतिक्रमितुं वा समुदितं समुत्पतितमिव स्थितमित्यर्थः । कुतः उच्छ्रितमुन्नतं हिमस्याचलं हिमाचलमभिययौ अत्राविवक्षितानेकफलविशिष्टा औन्नत्यगुणनिमित्तोदितादिक्रियोत्प्रेक्षा सा च व्यञ्जकाप्रयोगात्प्रतीयमानेति सङ्क्षेपः । द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥ १ ॥

तपनमण्डलदीपितमेकतः
सततनैशतमोवृतमन्यतः ।
हसितभिन्नतमिस्रचयम्पुरः
शिवमिवानुगतङ्गजचर्म्मणा ॥ २ ॥
क्षितिनभःसुरलोकनिवासिभिः
कृतनिकेतमदृष्टपरस्परैः ।

तपनेति । एकतः एकस्मिन् भागे । सार्व्वविभक्तिकस्तसिः । तपनमण्डलेन दीपितम्प्रकाशितं अन्यतोऽन्यस्मिन् भागे सततेनानिषिद्धेन नैशेन निशाभवेन तमसावृतम् एकत्राह्ना रात्र्या चान्यत्र सङ्गतमित्यर्थः । अतएव पुरोऽग्रे हसितेनाट्टहासेन विभिन्नतमिस्रचयन्निरस्ततमस्तोमं तथा गजचर्म्मणा अनुगतम्पश्चाद्व्याप्तम् । पश्चात्सादृश्ययोरन्वित्यमरः । शिवमिव स्थितम् । तपनतेजःप्रसारोऽप्यस्य कारणमिव कुत्रचित्परिसमाप्यतइति महत्त्वातिशयोक्तिः ॥ २ ॥

क्षितीति । परस्परेऽन्योन्ये । कर्म्मव्यतिहारे सर्व्वनाम्नोद्वे भवतइति वक्तव्यात्परशब्दस्य द्विर्भावः समासवच्च बहुलं यदा समासवत्प्रथमैकवचनन्तदा पूर्व्वपदस्येति वक्तव्यात् प्रथमैकवचनं सुट् कस्कादित्वाद्विसर्जनीयस्य सत्वम्बहुवचनञ्चान्योन्यशब्दवत् । यथा माघे अन्यो-

प्रथयितुं विभुतामभिनिर्म्मित-
-प्रतिनिधिञ्जगतामिव शम्भुना ॥ ३ ॥
भुजगराजसितेन नभःश्रिता
कनकराजिविराजितसानुना ।
समुदितन्निचयेन तडित्वतीं
लघयता शरदम्बुदसंहतिम् ॥ ४ ॥

न्येषां पुष्करैराक्रमन्त इति । अदृष्टाः परस्परं यैस्ते अदृष्टपरस्परास्तैस्तथोक्तैः । क्षितौ नभसि सुरलोके च निवसन्तीति तैस्तथोक्तैः भूर्भुवःस्वर्लोकवासिभिरित्यर्थः । कृतनिकेतं कृतासदनम् अतएव शम्भुना विभुतां स्वसामर्थ्यं प्रथयितुम् अभिनिर्म्मितञ्जगतां प्रतिनिधिं प्रतिकृतिमिव स्थितमित्युत्प्रेक्षा । प्रतिकृतिरर्च्चाः पुंसि प्रतिनिधिरुपमोपमानं स्यादित्यमरः । त्रैलोक्यश्लाघेत्रापरमपरिच्छेद्यश्चेति भावः ॥ ३ ॥

भुजगेति । पुनश्च भुजगराजसितेन शेषाहिधवलेन नभःश्रिता गगनस्पृशा कनकस्य राजिभिः रेखाभिः विराजिताः सानवो यस्य तेन तथोक्तेन अतएव तड़ित्वतीं शरदम्बुदसंहतिं लघयता लघुकुर्व्वता तत्तुल्येनेत्यर्थः । अतएवोपमालङ्कारः । निचयेन शिखरसमुच्चयेन समुदितं समुन्नतम् ॥ ४ ॥

मणिमयूखचयांशुकभासुराः
सुरवधूपरिभुक्तलतागृहाः ।
दधतमुच्चशिलान्तरगोपुराः
पुर इवोदितपुष्पवना भुवः ॥ ५ ॥
अविरतोज्झितवारिविपाण्डुभि
र्विरहितैरचिरद्युतितेजसा ।

मणीति । पुनर्म्मणिमयूखचयाएव अंशुकानि पट-
काण्डादीनि तैर्भासुराः सुरवधूभिः परिभुक्ता लताः गृहा-
णीव यासु तास्तथोक्ताः । उच्चानि शिलान्तराणि शिला-
मध्यानि गोपुराणीव यासु ताः उदितान्यूर्जितानि पुष्पाणां
वनानि तासु ताः अतएव पुर इव नगराणीव स्थिताः
भुवोदधतम् ॥ ५ ॥

अविरतेति । पुनश्च अविरतम् अविच्छिन्नम् उज्झितं
वारि यैस्तेऽविरतोज्झितवारयोवृष्टिमन्तइत्यर्थः । अतएव
विपाण्डवश्च तैरविरतोज्झितवारिविपाण्डुभिः । अतो-
ऽहिमवत्पक्षत्वं सम्भवतीति भावः । अचिरद्युतितेजसा
विरहितैः विद्युत्तेजोरहितैः । आरतनिःस्वनैः प्रशान्त-
गर्जितैश्च अन्यथा पक्षत्वहानिः स्यादिति भावः । पृथु-
नितम्बविलम्बिभिः महाकटकसङ्गिभिः । कटकोऽस्त्री नि-
तम्बोऽद्रेरित्यमरः अम्बुदैरुदितपक्षं सञ्जातपक्षमिव स्थि-

उदितपक्षमिवारतनिःस्वनैः
पृथुनितम्बविलम्बिभिरम्बुदैः ॥ ६ ॥
दधतमाकरिभिः करिभिः क्षतैः
समवतारसमैरसमैस्तटैः ।
विविधकामहिता महिताम्भसः
स्फुटसरोजवना जवना नदीः ॥ ७ ॥

तम्। सम्छिन्नपक्षस्यापि हिमाद्रेर्धवलाम्बुदसम्बन्धात्पुनः पक्षोत्थानमुत्प्रेक्ष्यते ॥ ६ ॥

दधतमिति। पुनश्चाकरः खनिरेषामस्ति योनित्वेनेत्याकरिभिराकरजैः। खनिः स्त्रियामाकरः स्यादित्यमरः। करिभिःजैः करटिभिः क्षतैर्भग्नैः समवतारेषु तीर्थेषु समैरविषमैः असमैरसदृशैरतादृशैरनुपमैरित्यर्थः तटैरुपलक्षिताः तथा महिताम्भसः श्लाघ्योदकाः अतएव विविधेभ्यः कामेभ्यः अवगाहनाद्युपभोगेभ्योहिताः अनुकूलाः। चतुर्थी तदर्थेत्यादिना समासः। स्फुटानि विकसितानि सरोजवनानि यासु ताः जवना वेगवतीः। जुचङ्क्रमेत्यादिना युच्। नदीर्दधतम्। यमकस्त्वनुप्रासभेदत्वात् स्वयमेवालङ्कारः। अर्थालङ्कारस्त्वभ्युच्चयः तस्यातिदुष्करत्वाद्रसपोषोऽपि नाद्रियते। तदुक्तम्। प्रायशो यमकेचित्रे रसपुष्टिर्न दृश्यते ॥ ७ ॥

नवविनिद्रजपाकुसुमत्विषां
द्युतिमतां निकरेण महाश्मनाम् ।
विहितसान्ध्यमयूखमिव क्वचि-
न्निचितकाञ्चनभित्तिषु सानुषु ॥ ८ ॥
पृथुकदम्बकदम्बकराजितं
ग्रथितमालतमालवनाकुलम् ।

नवेति । पुनश्च नवानि विनिद्राणि च यानि जपाकुसुमानि ताम्रपुष्पिकाकुसुमानि तेषां त्विषइव त्विषो येषान्ते तेषाम् । ओडपुष्पञ्जपापुष्परूपिका ताम्रपुष्पिका चेति वाग्भटः । द्युतिमतां महाश्मनां मणीनां पद्मरागाणामित्यर्थः विशेषणसामर्थ्यात् । निकरेण समूहेन हेतुना क्वचित् निचिताः सङ्घट्टिताः काञ्चनभित्तयो येषु तेषु सानुषु विहिताः सान्ध्याः सन्ध्यायाम्भवाः मयूखा यस्मिन् तमिव स्थितम् । काञ्चनभित्तिषु पद्मरागप्रभाप्रसरादुदितसन्ध्यारागइव भातीत्युत्प्रेक्षा ॥ ८ ॥

पृथ्विति । पुनश्च पृथुभिः कदम्बकदम्बकैः नीपकुसुमसमूहैः स्तवकैराजितम् । कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बकदम्बमथवापि विन्द्यः । ग्रथितमालैर्बद्धपङ्क्तिभिः तमालवनैस्तापिञ्छवनैराकुलमाकीर्णम् । कालस्कन्धस्तमालः स्यात्तापिच्छोपीत्यमरः । लघुतुषारम् अल्प

लघुतुषारतुषारजलश्च्युत

न्धृतसदानसदाननदन्तिनम् ॥ ९ ॥

रहितरत्नचयान्न शिलोच्चया

नपलताभवना न दरीभुवः ।

विपुलिनाम्बुरुहा न सरिद्वधू

रकुसुमान्दधतन्न महीरुहः ॥ १० ॥

शीकरं यत्तुषारजलं हिमोदकन्तत् श्च्योतति वर्षति तन्त-थोक्तम्। तुषारौ हिमशीकराविति शाश्वतः॥ श्चुते-श्चोऽपि दृश्यतइति क्विप्। सदानाः समदाः सदाननाः शोभनाननाश्च ये दन्तिनः ते धृतायेन तन्तथोक्तम् ॥ ९ ।

रहितेति। पुनश्च रहितरत्नचयान् रहितः परित्यक्तोरत्नचयोयैस्तान् रत्नराशिरहितान् शिलोच्चयान् शिखराणि न दधतम् अपलताभवनाः लताग्टहरहिताः दरीभुवोगुहाप्रदेशान्न दधतम्। दरी तु कन्दरोवा स्त्री देवखातविले गुहेत्यमरः। विगतानि पुलिनानि अम्बुरुहाणि च याभ्यस्ताः सरितोवध्वइव ताः सरिद्वधूर्न दधतम्। अत्र सरितांवध्वौपम्यात्पुलिनाम्बुरुहाणां वदनजघनौपम्यङ्गम्यते । अकुसुमान्महीरुहोवृक्षान्न दधतं किन्तु रत्नादिसम्पन्नानेव शिलोच्चयादीन् दधतमित्यर्थः। महाविभावयानाच नञ्सलासः॥ १० ॥

व्यथितसिन्धुमनीरशनैः शनै
रमरलोकवधूजघनैर्घनैः ।
फणभृतामभितोविततन्तत
न्दयितरम्यताविकुलैः कुलैः ॥ ११ ॥

ससुरचापमनेकमणिप्रभै
रपपयोविशदं हिमपाण्डुभिः ।
अविचलं शिखरैरुपबिभ्रतं
ध्वनितसूचितमम्बुमुचाञ्चयम् ॥ १२ ॥

व्यथितेति । पुनश्चानीरशनैरनिर्मेखलैः सरशनैरित्यर्थः । घनैर्निबिडैः अमरलोकवधूजघनैः शनैर्मन्दं मन्दं व्यथितसिन्धु क्षोभितनदीकम् अयमपरः स्वर्गइति भावः । दयिताः प्रियारम्यालतावीरुधोविकुलाः केसराश्च येषान्तैस्तथोक्तैः । विशारदोमद्यगन्धोविकुलः स च केसरइति वैद्यके । फणभृतां कुलैरभितस्ततं व्याप्तन्तथा विततं विस्तृतम् ॥ ११ ॥

ससुरेति । अनेकाविविधामणिप्रभायेषां तैस्तथोक्तैः हिमेन पाण्डुभिः शिखरैः ससुरचापं सेन्द्रचापम् अपपयोनिर्जलः अतएव विशदश्च तमपपयोविशदम् अविचलं दैवान्निश्चलञ्च अतःशिखरग्राह्यत्वाभूदित्यर्थः । किन्तु ध्वनितेन गर्ज्जितेन सूचितं ज्ञापितम् अम्बुमुचाञ्चयमु-

विकचवारिरुहं दधतं सरः
सकलहंसगणं शुचि मानसम्।
शिवमगात्मजया च कृतेर्ष्यया
सकलहंसगणं शुचिमानसम्॥ १३॥
ग्रहविमानगणानभितोदिवं
ज्वलयतौषधिजेन कृशानुना।

यबिभ्रतम्। अत्र कविकल्पितसादृश्यात् शिखरांश व सन्देहे मेघनिश्चयात् सन्देहालङ्कारः॥ १२॥

विकचेति। पुनश्च विकचवारिरुहं नित्यविकसिता-रविन्दमित्यर्थः शक्तिसामर्थ्यात्। कलहंसगणैः सह वर्त्तत इति सकलहंसगणम्। कादम्ब कलहंसः स्यादि-त्यमरः। यद्वा सकलाः सर्व्वे हंसगणायस्मिन् तत्तथोक्तम्। शुचि नित्यनिर्मलं मानसं मानसाख्यं सरः दधतम्। किञ्च कृतेर्ष्यया कुतश्चिन्निमित्तात्कुपितयेत्यर्थः अगात्म-जया पार्व्वत्या सकलहंसविवादं सगणं समथम्। गणाः प्रमथसङ्ख्यौघाइति वैजयन्ती। शुचिमानसम् अविद्या-विनिर्मुक्तचित्तं शिवञ्च दधतम्। एतेन सकलशैलशैलच-यमस्योक्तम्॥ १३॥

ग्रहेति। दिवमभितोदिवोऽभिमुखम्। अभितः परितइत्यादिना द्वितीया। ग्रहाश्चन्द्रादयोविमानानि देव-यानानि च। व्योमयानं विमानोऽस्त्रीत्यमरः। तेषा-गणान् ज्वलयता प्रदीपयता। सिता हंसइति हंसः।

मुहुरनुस्मरयन्तमनुक्षपं
त्रिपुरदाहमुमापतिसेविनः ॥ १४ ॥
विततशीकरराशिभिरुच्छ्रितै-
रुपलरोधविवर्त्तिभिरम्बुभिः।
दधतमुन्नतसानुसमुद्धतां
धृतसितव्यजनामिव जाह्नवीम् ॥१५॥
कुलकम् ॥

ओषधिजेन तृणविशेषजन्येन कृशानुना अनुक्षपम्प्रतिक्षपम्। वीप्सायामव्ययीभावः। उमापतिसेविनः प्रमथान् गतिबुद्धीत्यादिना द्विकर्मकत्वम्। त्रयाणाम्पुराणां समाहारस्त्रिपुरम्। तद्धितार्थेत्यादिना समासः पात्रादिभ्यः प्रतिषेधो वक्तव्य इति स्त्रीलिङ्गप्रतिषेधः। तस्य दाहन्त्रिपुरदाहं मुहुरनुस्मरयन्तम्। नन्वधीगर्थेत्यादिना दाहमित्यत्र षष्ठी किन्न स्यात् तस्याः शेषार्थे विधानात् शेषस्याविवक्षितत्वात्। अत्र कविसम्मतसादृश्यात् स्मृतिरिति स्मरणालङ्कारः ॥ १४ ॥

विततेति। विततशीकरराशिभिः विस्तृतशीकरपुञ्जैरुच्छ्रितैरत्युन्नतैः कुतः उपलरोधेनावविवर्त्तिभिरम्बुभिर्हेतुभिः धृतसितव्यजनामिव गृहीतामलचामरामिव स्थितामित्युत्प्रेक्षा। उन्नतसानुषु समुद्धतां वहन्तीं जाह्नवीं गङ्गान्दधतम् ॥ १५ ॥

अनुचरेण धनाधिपतेरथो
नगविलोकनविस्मितमानसः।
स जगदे वचनम्प्रियमादरा
न्मुखरतावसरे हि विराजते ॥ १६ ॥
अलमेषविलोकितः प्रजानां
सहसा सन्ततिमंहसां विहन्तुम्।
घनवर्त्म सहस्रधेवकुर्व्वन्
हिमगौरैरचलाधिपः शिरोभिः ॥१७॥

अनुचरेणेति। अथो अनन्तरम्। मङ्गलानन्तरारम्भ-प्रश्नकार्त्स्न्येष्वथो अथेत्यमरः। धनाधिपतेरनुचरेण यक्षेण नगविलोकनविस्मितमानसः सोऽर्ज्जुनः। आदरात्प्रियं वचनञ्जगदे गदितः। गदतेर्ब्रूञर्थत्वाद् दुहादित्वात्प्रधाने कर्म्मणि लिट्। अपृष्टपरिभाषणदोषं परिहरति। मुख-रतेति। मुखरता वाचालत्वम् अपृष्टपरिभाषित्वमिति यावत् अवसरे श्रोतुराकाङ्क्षासमये विराजते हि। आकाङ्क्षितमपृष्टोऽपि ब्रूयादिति भावः॥ १६ ॥

अलमिति। हिमेन गौरैः शुभ्रैः शिरोभिः शिखरैः घनवर्त्मखं सहस्रधा कुर्व्वन् विपाटयन्निवेत्युत्प्रेक्षा। एषोऽचलाधिपो हिमवान् विलोकितोदृष्टमात्रएव प्रजा-नामंहसां सन्ततिम्पापसङ्घातं सहसा विहन्तुमलं समर्थः। पर्य्याप्तिवचनेष्वलमर्थेषु इतितुमुन्। औपच्छन्दसिकं वृ-

इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम् ।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥१८॥
रुचिरपल्लवपुष्पलतागृहै-
रुपलसज्जलजैर्जलराशिभिः ।

न्तम् । पर्यन्तयोर्यो तथैव शेषश्चौपच्छन्दसिकं सुधीभिरुक्तमिति लक्षणात् ॥ १७ ॥

इहेति । इहाद्रिनाविति सुतरं न भातीत्यसुतरं दुस्तरमित्यर्थः । तरतेः खल्प्रत्ययः । अन्तरं मध्यभागं पुरुषे त्वन्तरन्तत्त्वं दुरधिगमैर्दुर्ग्रहैर्दुःखेनाधिगन्तुमशक्यैः आगमैः पुराणादिभिः किञ्चिदेव सततं वर्णयन्ति । ननु कदाचित्प्रत्यक्षेणापि निःशेषं ज्ञातुमशक्यत्वादिति । भावः । किन्तु अतिविपिनमतिगहनं दिग्व्यापिनममुं भावः । किन्तु अतिविपिनमतिगहनं दिग्व्यापिनममुमद्रिं परम्पुरुषम्परमात्मानमिव परन्केवलम् । रूपमव्ययमिच्छन्ति केवलइति विश्वः । पद्मयोनिर्ब्रह्मैव वेद नान्य इत्यर्थः । भिदोलटौवेति णलादेशः । अत्रोपमायमकयोः संसृष्टिः । उपमाष्टतम् । तुरगरसयतिर्म्नौ तौ गः समा ॥ १८ ॥

रुचिरपल्लवेति । अयं गिरिः । रुचिराणि पल्लवानि पुष्पाणि च येषान्ते तथाभूतालतागृहायेषु तैरुपलसज्जलजैर्जलराशिभिः सरोभिः करणैः उपका-

नयति सन्ततमुत्सुकतामयं
न्धृतिमतीरुपकान्तमपि स्त्रियः ॥१९॥

सुलभैः सदा नयवताऽयवता
निधिगुह्यकाधिपरमैः परमैः ।
अमुना धनैः क्षितिभृताऽतिभृता
समतीत्य भाति जगती जगती ॥२०॥

कान्तसमीपे धृतिमतीर्धैर्यवतीरपि समीपस्थानपि प्रियान्न गणयन्ती मानिनीरित्यर्थः । स्त्रियः सन्ततम् उत्सुकतां नयति तासां मानग्रन्थिं शिथिलयतीत्यर्थः अथवा उपकान्तमतीस्तुष्टिमतीरपि सुरतलब्धा अपि पुनरुत्सुकतां नयतीत्यर्थः । उभयत्राप्युद्दीपकत्वातिशयोक्तिः । वृत्तमुक्तम् ॥ १९ ॥

सुलभैरिति । नयवता नीतिमता अयवता भाग्यवता च सदा सुलभैर्नान्यैरित्यर्थः । अयः शुभावहोविधिरित्यमरः । निधीनां महापद्मादीनाम् । अस्त्री पद्मोमहापद्मः शङ्खोमकरकच्छपौ । मुकुन्दनन्दनीलाश्च वर्चाः स्युर्निधयोनवेत्यमरः । गुह्यकानाञ्चाधिपं कुबेरं रमयन्तीति तथोक्तैः । कर्म्मण्यण् । परमैरुत्कृष्टैर्धनैः करणैरमुना क्षितिभृता हेतुना अतिभृता पूर्णा सती जगतीमही जगती स्वर्गपाताललोकौ समतीत्यतीत्य भाति । अमानुषैरपि दुर्लभाः सम्पदोऽत्र सम्भवन्तीति भावः । अत्र धनाधिपतेरिति पदार्थस्य विशेषणगत्या जगदति-

अखिलमिदममुष्य गौरीगुरो
स्त्रिभुवनमपि नैति मन्ये तुलाम् ।
अधिवसति सदा यदेनञ्जनै
रविदितविभवोभवानीपतिः ॥ २१ ॥

क्रमस्य हेतुत्वोक्त्या काव्यलिङ्गन्तस्य यमकेन संसृष्टि प्रमिताक्षरावृत्तम् । प्रमिताक्षरासजससैरुदितेति लक्षणात् ॥ २० ॥

अखिलमिति । अमुष्य गौरीगुरोर्हिमवतइदमखिलन्त्रयाणाम्भुवनानां समाहारस्त्रिभुवनमपि । तद्धितार्थेत्यादिना समासः पात्राद्दित्वात् स्त्रीत्वप्रतिषेधः । तुलां साम्यं नैति इति मन्ये । यत् यतोजनैरविदितविभवोऽज्ञातमहिमा भवानीपतिः सदा एनं गिरिमधिवसति अस्मिन्वसतीत्यर्थः । उपान्वध्याङ् वसइति कर्मत्वम् । अतोयन्त्वर्गाच्चेत्रमिति भावः । प्रमाद्वृत्तम् । स्वरशरविरतिर्नौ रौ प्रमेति लक्षणात् ॥ २१ ॥

वीतेति । वीते निवृत्ते जन्मजरसी यस्य तद्वीतजन्मजरसम् । जरायाजरसन्यतरस्यामिति जरसादेशः । अत्र तदन्तविधेरिष्टत्वात्परत्वेन स्यादेशबाधकत्वाच्च । तथाहि टाङसिङसामिनात् स्यादेशबाधनात् । परत्वाज्जरसादेशं बभाषे भाष्यकृत्स्वयम् । सूत्रकारमते यत्तु ज्ञापकात्परबाधनम् । भवेत्तदपि टाङसोर्न पुनर्ङसि सम्भवेत् । मतद्वयेऽपि तत्तुल्यं ङसि यत्पूर्वबाधनम् ॥ पर-

वीतजन्मजरसम्परं शुचि
ब्रह्मणः पदमुपैतुमिच्छताम् ।
आगमादिव तमोपहादितः
सम्भवन्ति मतयोभवच्छिदः ॥ २२ ॥

त्वाज्जरसादेशस्तत्स्यात्स्यादेशबाधनात् । ज्ञापकश्चात्र टाङसोर्यादेशाविनादिति । ईकारदीर्घयोरत्र वैयर्थ्यं तत्तु तौ विना । एत्वे सवर्णदीर्घे च रूपसिद्धिर्भवेद्यतः । व्यर्थसूत्राचरत्यागात्तेन तज्ज्ञापचक्षणी । स्वातन्त्र्याज्जरसादेशो जगौ पूर्वस्यबाधनात् । समर्थनप्रपञ्चस्तु भाष्यकैयटयोः स्फुटः । एवञ्च यदत्र जरसइति केषाञ्चित् पाठान्तरकल्पनन्तदज्ञानविजृम्भितमेव । ब्रह्मणः परमात्मनः तत्सम्बन्धि परमुत्कृष्टं शुचिनिष्कलङ्कम्पद्यत इति पदं स्थानन्तादात्म्यलक्षणम् । मुक्तिमित्यर्थः । उपैतुमाप्तुमिच्छतां मुमुक्षूणाम् आगमात् शास्त्रादिव तमोऽपहन्ति इति तमोऽपहादविद्यानिवर्त्तकत्वात् । अपेक्लेशतमसोरिति डप्रत्ययः । इतोऽस्मादद्रेः भवं छिन्दन्तीति भवच्छिदः संसार निवर्त्तकाः । सत्सूद्विषेत्यादिना क्विप् । मतयः तत्त्वज्ञानानि सम्भवन्ति । चेत्रविशेषस्यापि ज्ञानोपपादकत्वादित्याशयः । न च केवलम्भोगभूमिः किन्तु मुक्तिक्षेत्रमपीति तात्पर्यार्थः । रथोद्धतावृत्तम् । तल्लक्षणं रान्नराविह रथोद्धता लगाविति ॥ २२ ॥

दिव्यस्त्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पापीडाः।
पीडाभाजः कुसुमचिताः साशंसं
शंसन्त्यस्मिन् सुरतविशेषं शय्याः॥ २३॥

दिव्येति। अस्मिन् गिरौ चरणलाक्षारागैस्सह वर्त्तन्ते तास्तथोक्ताः धेनुकपुरुषायितादिबन्धेषु स्त्रियः पादतल स्पर्शात्तद्रागाङ्किता इत्यर्थः। निपतिताः व्यानतकरणे स्त्रीणामधोमुखत्वात् भ्रष्टाः पुष्पापीड़ाः कुसुमशेखरा यासु तास्तथोक्ताः। शिखास्वापीड़शेखरावित्यमरः। पीड़ाभा-जोविमर्दभाजो भङ्गिमत्य इत्यर्थः। भ्रमरप्रेङ्खोलितादौ सर्व्वतः कटिपरिभ्रमणसम्भवादिति भावः। कुसुमैश्चिताः कुसुमचिताः। इभमार्जारादिकरणेषु स्तनभुजाद्यवय-वानां शय्यातलस्पर्शायित्वान्मार्दवाय कुसुमचिताः कुसुमा-स्तृताइत्यर्थः। दिव्यस्त्रीणां सम्बन्धिन्यः शेरते आस्विति शय्याः तल्पानि। संज्ञायां समजनिपदेत्यादिना क्यप्। रागायाते रागोद्रेके सति यस्माशंसः सतृष्णः सुरत-विशेषस्तं जातावेकवचनं सुरतविशेषानित्यर्थः। शंसन्ति सूचयन्ति विवृण्वन्तीत्यर्थः। अत्र लाक्षारागादिपदार्थानां सुरतविशेषसंशनम्प्रति विशेषणगत्या हेतुत्वोक्त्या काव्यलि-ङ्गमलङ्कारः यमकेन संसृज्यते। जलधरमालावृत्तम्। अभौ स्मौ चेत् स्याज्जलधरमाला व्याप्तेति लक्षणात्। धेनुकादि-बन्धलक्षणन्तु रतिरहस्ये। न्यस्तहस्तयुगला निजे पदे

गुणसम्पदा समधिगम्य परं
महिमानमत्र महिते जगताम् ।
नयशालिनि श्रियइवाधिपतौ
विरमन्ति न ज्वलितुमोषधयः ॥ २४ ॥

यो ऽधरेति कटिरूढ़वल्लभा । अग्रतो यदि शनैरधोमुखी
मेनुकं दृषवदुच्यते प्रिये १ स्वेच्छया भ्रमति वल्लभेऽपि या
योषिदाचरति वल्लभायितम् । व्यानतं रतमिदं यदि
प्रिया स्यादधोमुखचतुष्पदाकृतिः २ तत्कटिं समधिरुह्य
वल्लभः स्यादुरःप्रादिपशुसंस्थितिस्थितिः चक्रवद्भ्रमति
कुञ्चितत्रिका भ्रामरं निगदितं समुद्गतम् ३ सर्वतः कटि-
परिभ्रमो यदि प्रेङ्खपूर्वमिदमुक्तमारतम् । भूगतस्तनभुजा-
स्यमस्तका मुन्नतां स्वयमधोमुखीं स्त्रियम् ४ क्रामति स्वक-
रकृष्टमेहने वल्लभे करिरतन्तदुच्यते ऽऽप्रसादिते पाणिपादे
प्रत्यास्पर्शामुखो ऽसि । उन्नतायाः स्त्रियाः कट्यां मार्जारी-
क्रमणं विदुरिति ग्रन्थान्तरे ॥ २३ ॥

गुणेति । जगतां महिते जगद्भिः पूजिते पूज्यमाने ।
मतिबुद्धीत्यादिना वर्त्तमाने क्तः क्तस्य च वर्त्तमान इति
षष्ठी । अत्र हिमवति ओषधयस्तृणज्योतींषि नयशालिनि
अधिपतौ नीतिसम्पन्ने राज्ञि श्रियः सम्पदइव गुणसम्पदा
स्नेहगुणसम्पत्त्या अन्यत्र सन्ध्यादिगुणसम्पदा परं महि-
मानम् उभयत्रापि प्रकाशसामर्थ्यं समधिगम्य ज्वलितुम्प्र-

कुररीगणः कृतरवस्तरवः
कुसुमानताः सकमलं कमलम् ।
इह सिन्धवश्च वरणावरणाः
करिणां मुदे सनलदानलदाः ॥ २५ ॥
सादृश्यकृतमपनिद्रचूतगन्धै-
रामोदं मदजलसेकजं दधानः ।

कश्चित्तत्र विरमन्ति अविरलं ज्वलन्तीत्यर्थः । अत्यन्त रात्रावदीवेति भावः ॥ २४ ॥

कुररीति । इहाद्रौ कुररीगणः उत्क्रोशसङ्घः । उत्क्रोश-कुररौ समावित्यमरः । कृतरवः कृतारवः तरवः कुसुमैरानताः कमलं जलं सकमलं सपद्मम् । कमलञ्जल-पद्मयोरिति विश्वः । वरणाः द्रुमाः आवरणं यासान्ता-वरणावरणाः । वरणोवरुणः सेतुस्तिक्तशाकः कुमारक इत्यमरः । सनलदाः सोशीराः । मूलेऽस्योशीरमस्त्रि-याम् । अभयन्नलदं सेव्यमित्यमरः । अनलं सन्तापं द्यन्ति खण्डयन्ति शमयन्तीत्यनलदाः सनलदाश्च ताः अनलदाः सिन्धवोनद्यः करिणां मुदे भवन्तीति शेषः । न कुत्राप्यु-क्तवैपरीत्यमिति भावः ॥ २५ ॥

सादृश्यमिति । एतस्मिन्पर्व्वते अपनिद्रचूतगन्धैः सादृश्यकृतं चूतपुष्पसादृशं मदजलसेकजमामोदं परि-मलं दधानोविभ्राणः । अतएव लीनालिः संसक्तभृङ्गः

एतस्मिन्मदयति कोकिलानकाले
लीनालिः सुरकरिणां कपोलकाषः ॥२६॥

सनाकवनितन्नितम्बरुचिर
ञ्चिरंसुनिनदैर्नदैर्वृतममुम्।
मता फणवतोऽवतोऽरसपरा
परास्तवसुधा सुधाधिवसति ॥ २७ ॥

सुरकरिणां कष्यते अनेनेतिकाषः। कपोलानां काषः कषणाश्मानन्दनस्कन्धादि। अकाले वसन्तातिरिक्ते कालेऽपि कोकिलान्मदयति। लिनां लस्वइति लयः। इत्र वसन्तरूपकारणाभावोऽपि मदाख्यकार्योत्पत्ति कथनाद्विभावनालङ्कारः। तदुक्तम् कारणेन विना कार्य्यस्योत्पत्तिः स्याद्विभावनेति। सा च चूतगन्धैः सादृश्यम् इत्युपमया आमोदन्दधानइति पदार्थहेतुककाव्यलिङ्गेन चाङ्गाङ्गिभावेन सङ्कीर्यते। किञ्च कोकिलानां मदगन्धकृतनूतनगन्धभ्रान्त्या भ्रान्तिमदलङ्कारोव्यज्यते। प्रहर्षिणीवृत्तम्। म्नौ ज्रौ गस्त्रिमदशयतिः प्रहर्षिणीयमिति लक्षणात् ॥ २६॥

सनाकेति। पुनश्च सनाकवनितं साप्सरस्कन्नितम्बैः कटकैः रुचिरम्। सुनिनदैः सुघोषैर्नदैः प्रवाहैर्वृतम् अमुम् अमुष्मिन् गिराविल्यर्थः। उपान्वध्याङ्वसइति कर्म्मत्वम्। अवतः अधोलोकरक्षकस्य फणवतो नागराजस्य मता इष्टा। मतिबुद्धीत्यादिना वर्त्तमाने क्तः तद्योगात् षष्ठी। रसेन परा उत्कृष्टा॥ परास्तवसुधा तत्कभूलोकासुधा अमृत

श्रीमल्लताभवनमोषधयः प्रदीपाः
शय्या नवानि हरिचन्दनपल्लवानि ।
अस्मिन् रतिश्रमनुदश्च सरोजवाताः
स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ॥२८॥

ईशार्थमम्भसि चिराय तपश्चरन्त्या
यादोविलङ्घनविलोलविलोचनायाः ।

श्चिरमधिवसति । अतोऽन्यत्र भूमण्डले कुत्रापि सुधा नास्तीत्यर्थः । सेव्यमभावोऽयमद्रिरिति भावः । अत्र प्रस्तुतविशेषणसामर्थ्यादप्रस्तुतस्य प्रतीतेः समासोक्तिरलङ्कारः स च वसकेन संसृज्यते । जलोद्धतगतिर्वृत्तम् । रसैर्जसजसाजलोद्धतगतिरिति लक्षणात् ॥ २७ ॥

श्रीमदिति । अस्मिन्नद्रौ श्रीमल्लताएव भवनम् अषोधयस्तृणज्योतींष्येव प्रदीपाः नवानि हरिचन्दनपल्लवानि सुरतरुकिसलयान्येव शय्याः । हरिचन्दनमाख्यातं गोशीर्षे सुरपादपद्मेति विश्वः । रतिश्रमनुदः सुरतश्रमहारिणः सरोजवाताश्च सुरसुन्दरीभ्यः । क्रियाग्रहणाच्चतुर्थी । दिवो दिवम् । अधीगर्थेत्यादिना कर्म्मणि षष्ठी । स्मर्तुं न दिशन्ति । विस्मारयन्तीत्यर्थः । स्वर्गादपि अतिरिच्यतेऽसाविति भावः । अत्र पूर्वार्द्धे रूपकत्रयं स्फुटमेव ॥ २८ ॥

ईशार्थमिति । ईशायेति ईशार्थं यथा तथेति क्रियाविशेषणम् । अर्थेन सह नित्यसमासः सर्व्वलिङ्गता च

आलम्बताग्रकरमत्र भवो भवान्याः
श्च्योतन्निदाघसलिलाङ्गुलिना करेण ॥ २९ ॥
येनापविद्धसलिलः स्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ।

वत्यान्या । चिराय चिरमस्मिन् तपश्चरन्त्या अतएव यादोविलङ्घनविलोलविलोचनायाः जलजन्तुविघट्टितच- लेक्षणायास्तपसोऽप्यधिकष्टत्वेन विलोभयन्त्याइति भावः । यादांसि जलजन्तवइत्यमरः । भवान्याः भवपत्न्याः भय- नकालापेक्षोऽयं निर्देशः । इन्द्रवरुणभवेत्यादिना ङीष् आनुगागमश्च । करैकदेशस्यापि करत्वादग्रश्चासौ करश्चेति समानाधिकरणे समासः । अतएव वामनः । हस्ताग्राग्रह- स्तयोर्गुणगुणिनोर्भेदाभेदाविति तमग्रकरं भवः शिवः श्च्यो- तन्निदाघसलिलाङ्गुलिना स्रवत्स्वेदाङ्गुलिनेति सात्त्वि- कोक्तिः । करेणात्र शिरावालम्बत स्पृष्टवान् । अत्राङ्ग- नातीतवृत्तान्तस्य प्रत्यक्षवदभिधानाद्भाविकालङ्कारः । अ- तीतानागते यत्र प्रत्यक्षवदलक्षिते । अत्यद्भुतार्थकाव्यत्वा- द्भाविकन्तदुदाहृतमिति लक्षणात् । वसन्ततिलकावृत्तम् उक्ता वसन्ततिलका तभजाजगौ गइति लक्षणात् ॥२९॥

येनेति । देवाश्चासुराश्च तैर्देवासुरैः । येषां च विरो- धोऽश्वाश्वतिकइति नैकवद्भावः एषां यतः कार्य्यतएव विरो- धेन गोव्याघ्रादिवच्छाश्वतिकइत्याद्यः । येन मन्दराद्रिसा- मप्यद्दण्डोङ्कलेनेति भावः अपविद्धसलिलः क्षिप्तजलः अत

व्यावर्त्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः॥ ३०

नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रै-
रानीलाभैर्विरचितपरभागा रत्नैः।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया॥ ३१॥

एव स्फुटन्नागसद्म पातालं यस्मिन् सोऽम्बुनिधिरमृतं ममन्थे मथितः। मथ्नातेर्द्विकर्मकत्वाद्दुहादित्वादप्रधाने कर्मणि लिट्। अहिपतेरित्यगुणीकृतस्य वासुकेरित्यर्थः। मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिमिति भारतवचनात्। व्यावर्त्तनैर्वेष्टनैराहिताङ्कः कृतचिह्नः सोऽयं मन्दराद्रिः खं आकाशं व्यालिखन् व्यापाटयन्निव विभाति। इवौपम्यानुपादानेनैव खण्डनेनोत्प्रेक्षणादनुपात्तगुणनिमित्ता क्रियास्वरूपोत्प्रेक्षा॥ ३०॥

नीतेति। इहाद्रावशिशिररश्मेरुष्णांशोरुस्रैर्मयूखैः सङ्क्रान्तैरित्यर्थः। नीतोच्छ्रायमुच्छ्रायन्नीता विस्तारितेत्यर्थः। तथा आनीलाभैरसितप्रभैरत्नैरिन्द्रनीलैर्विरचितपरभागा तत्सन्निधानाल्लब्धोत्कर्षेत्यर्थः। हंसइव श्येनी श्वेतवर्णा विशदश्येतपाण्डरा इत्यमरः। वर्णादनुदात्तात्तोपधात्तो नइति श्येतशब्दात् ङीप् तकारस्य च नकारः। स्फटिकानां रजतानाञ्च भित्तयस्तासाञ्छाया

दधतइव विलासशालि नृत्यं
मृदु पतता पवनेन कम्पितानि ।
इह ललितविलासिनीजनभ्रू
गतिकुटिलेषु पयःसु पङ्कजानि ॥ ३२ ॥
अस्मिन्नगृह्यत पिनाककृता सलील
माबद्धवेपथुरधीरविलोचनायाः ।

कान्तिः चन्द्रोमध्य मध्याङ्केऽपीत्यर्थः मुक्तज्योत्स्नाशङ्कां वितरति। ज्योत्स्नाकृते भ्रान्तिञ्जनयतीति भ्रान्तिमदलङ्कारः॥ ३१ ॥

दधतइति। इहाद्रौ मृदु पतता मन्दं वहता पवनेन कम्पितानि पङ्कजानि ललितविलासिनीजनस्य भ्रूगतिवत्कुटिलेषु ईषत्तरङ्गितेष्वित्यर्थः पयःसु विलासशालि नृत्यं दधतइव सविलासं नृत्यन्तीवेत्युत्प्रेक्षा। पुष्पिताग्रावृत्तम् ॥ ३२ ॥

अस्मिन्निति। अस्मिन्नद्रौ पिनाकभृता शिवेनाधीरविलोचनायाश्चकितदृष्टेरगदर्शनादिति भावः। ईश्वरायागौर्य्याः। स्थेशभासेत्यादिना वरच्। पुंयोगविवक्षाभावान्न ङीष्। आबद्धवेपथुः प्राप्तकम्पइति सात्त्विकोक्तिः। ट्वितोऽथुजित्यथुच्प्रत्ययः। विन्यस्तामङ्गलमहौषधिर्यत्राङ्गुरादियस्मिन् स पाणिः सलीलगलितः चरणएव प्रतिसरः कौतुकसूत्रं यस्य तेन। याङ्कः प्रतिसरोहस्तसूत्रे मूल्ये च मण्डनइति विश्वः। करेण सलीलमग्राह्यतेति देवस्य पार्व-

विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः ॥ ३३ ॥
क्रामद्भिर्घनपदवीमनेकसङ्ख्यै-
स्तेजोभिः शुचिमणिजन्मभिर्व्विभिन्नः।
उस्राणां व्यभिचरतीव सप्तसप्तेः
पर्य्यस्यन्निह निचयः सहस्रसङ्ख्याम् ॥ ३४ ॥
व्यधत्त यस्मिन्पुरमुच्चगोपुर
म्पुरां विजेतुर्द्धृतये धनाधिपः।

तीपरिणयनवर्णनम्। ईशार्थमित्यत्र त्वनुग्रहमात्रोक्तिरि-
त्यपौनरुक्त्यम्। भाविकमेवालङ्कारः ॥ ३३ ॥

क्रामद्भिरिति। घनपदवीमाकाशं क्रामद्भिर्व्याप्नुवानै-
रनेकसङ्ख्यैः परःसहस्रैरित्यर्थः। क्वचिदनेकवर्णैरिति
पाठस्तु प्रामादिकएव वैयर्थ्याद्व्याघाताच्चेति। शुचिम-
णिभ्यः स्फटिकेभ्योजन्मयेषान्तैः। जन्माद्युत्तरपदोबहुव्री-
हिर्व्यधिकरणोपीष्यतइति वामनः। तेजोभिर्विभिन्नोवि-
मिश्रः अतएव पर्य्यस्यन्प्रसर्पन्निहाद्रौ सप्तसप्तेः सवितु-
रुस्राणां किरणान्निचयोनिकरः। सहस्रमिति सङ्ख्या-
सहस्रसङ्ख्या तां स्वनियतामिति शेषः। व्यभिचरति
अतिक्रामतीवेत्युत्प्रेक्षा ॥ ३४ ॥

व्यधत्तेति। यस्मिन् कैलासे धनाधिपः कुबेरः पुरां
विजेतुः शिवस्य धृतये सन्तोषायोच्चगोपरमुन्नतपुरद्वा-

स एष कैलास उपान्तसर्पिणः
करोत्यकालास्तमयं विवस्वतः ॥ ३५ ॥
न नानारत्नज्योतिषां सन्निपातै
श्छन्नेष्वन्तःसानु वप्रान्तरेषु ।
बद्धां बद्धां भित्तिशङ्कामसुष्मि-
न्नावानावान्मातरिश्वा निहन्ति ॥ ३६ ॥

रम् । पुरद्वारन्तु गोपुरमित्यमरः । पुरमलकाख्याम्पुरीं
व्यवस्य निर्मितवान् तत्स्थितवानिति भावः । स एष
कैलासउपान्तसर्पिणः प्रान्तचारिणो विवस्वतोऽकाले प्रति-
द्वेतरकाले अस्तमयङ्करोतीवेत्युत्प्रेक्षा । वस्तुतस्तु तत्का-
रणाभावादव्यञ्जकाप्रयोगाद्गम्योत्प्रेक्षा । सा चोपान्त-
र्तितयाऽसम्बन्धे सम्बन्धरूपणातिशयोक्त्युत्थापितेति
विवेकः । अस्तमिति मकारान्तमव्ययम् । तस्य पश्चाद्द-
र्शनेनायशब्देन षष्ठीसमासः । वंशस्थं वृत्तमुक्तम् ॥ ३५ ॥

नानेति । अमुष्मिन् कैलासे अन्तःसानु सानुष्वि-
त्यर्थः । विभक्त्यर्थेऽव्ययीभावः । नानारत्नज्योतिषां सन्नि-
पातैर्व्यतिकरैः छन्नेषु छादितेषु । वा दान्तशान्तेत्यादिना
निपातः । वप्रान्तरेषु कटकान्तरेषु बद्धांबद्धामभीक्ष्णं
बद्धां दृढीकृतामित्यर्थः । नित्यवीप्सयोरिति नित्यार्थे
द्विर्भावः नित्यमाभीक्ष्ण्यमिति काशिका । एकपदञ्चैतत् ।
भित्तिशङ्कां भित्तिरिति सन्देहमावानावामभीक्ष्णमापतन् ।
आङ्पूर्वाद्वाधातोः शतृप्रत्ययः द्विर्भावादि पूर्ववत् ।

रम्या नवद्युतिरपैति न शाद्वलेभ्यः
श्यामीभवन्त्यनुदिनं नलिनीवनानि ।
अस्मिन्विचित्रकुसुमस्तवकाचितानां
शाखाभृतां परिणमन्ति न पल्लवानि ॥ ३७ ॥
परिसरविषयेषु लीढमुक्ताः
हरिततृणोद्गमशङ्कया मृगीभिः ।

मातरि अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुः । कनिन्प्रत्ययः । तत्पुरुषे कृति बहुलमित्यलुक् । निहन्ति निवर्त्तयति वायुसञ्चाराङ्गित्वभावोऽबधार्यतद्गत्यर्थः । अ-तोनिश्चयान्तः सन्देहालङ्कारः शालिनीवृत्तम् ॥ २६ ॥

रम्येति । अस्मिन्नद्रौ शादाः शष्पाणि सन्त्येष्विति शाद्वलास्तेभ्यः । शाद्वलः शादहरितइत्यमरः । नड-शादाड्ड्वलच् । रम्यानवा द्युतिर्नापैति किन्तु स्थितेत्यर्थः । नलिनीवनान्यनुदिनं सर्वदाश्यामीभवन्ति न कदाचित्पा-ण्डरीभवन्तीत्यर्थः । विचित्रकुसुमस्तवकैराचितानां व्या-प्तानां शाखाभृतान्तरूणां पल्लवानि न परिणमन्ति नजी-र्णानि भवन्तीत्यर्थः सर्वदा नूतनान्येवेत्यर्थः । अत्र प्रस्तुत-स्यैव तद्वस्तुगतकान्तिस्थैर्य्यरूपकार्य्यवर्णनात् प्रस्तुतस्यैव कारणस्यैवासाधारणः कैलासस्य महिमावगम्यत इति पर्य्यायोक्तिरलङ्कारः । तदुक्तम् । कारणं गम्यते यत्र प्रस्तुतात्कार्य्यवर्णनात् । प्रस्तुतत्वेन सम्बन्धस्तत्पर्य्यायोक्त-मुच्यत इति ॥ २७ ॥

इह नवशुककोमला मणीनां
रविकरसम्वलिताः फलन्ति भासः ॥ ३८ ॥
उत्फुल्लस्थलनलिनीवनादमुष्मा
दुद्धूतः सरसिजसम्भवः परागः।
वात्याभिर्व्वियति विवर्त्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥ ३९ ॥

परिसरेति। इहाद्रौ परिसरविषयेषु पर्य्यन्तदेशेषु। विषयो देश इति निपातः। मृगीभिर्हरिततृणोद्गमशङ्कया मीलतृणाङ्कुरभ्रान्त्येति भ्रान्तिमदलङ्कारैः। लीढ़ा पूर्व्व-मास्वादिताः पश्चान्मुक्ता लीढ़मुक्ताः। दग्धप्ररूढ़ इत्यादिवत् पूर्व्वकालेत्यादिना समानाधिकरणसमासः। नवशुक-कोमलाः शुकसवर्णा इत्यर्थः मणीनां मरकतमणीनाम्भासो रविकरैः सम्वलिताः मिश्रिताः सत्यः फलन्ति सम्मूर्च्छन्ति वर्द्धन्त इति यावत् ॥ ३८ ॥

उत्फुल्लेति। वात्याभिर्व्वातसमूहैः। वातादिभ्योय-दिति यत्प्रत्ययः। अमुष्मादुत्फुल्लस्थलनलिनीवनात्। जल-पतितस्य परागस्योत्थानासम्भवात् स्थलग्रहणम्। उत्-फुल्लसम्फुल्लयोरुपसङ्ख्यानान्निष्ठालत्वम्। उद्धूत उत्-थितो वियति समन्ताद्विवर्त्तितः परिमण्डलितः। अन्त-राले तु दण्डायमान एवेति भावः। सरसिजसम्भ-पद्मोद्भवः परागः। रूढ्यभिप्रायेणात्र सरसिजशब्दा-योगो द्रष्टव्यः। कनकमयातपत्रलक्ष्मीमाधत्ते। अत प

इह सनियमयोः सुरापगाया
उषसि सयावकसव्यपादलेखा ।
कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥ ४० ॥

[illegible]
रालोलपादपलतान्तरनिर्गतानाम् ।

गस्य आतपत्रलक्ष्मीसम्बन्धासम्भवात् तत्सदृशीं लक्ष्मीमिति प्रतिबिम्बेनाक्षेपादसम्भवद्धर्मसम्बन्धेयं निदर्शना । तदुक्तम् । असम्भवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रियागम्या यत्र सा स्यान्निदर्शनेति ॥ ३९ ॥

इहेति । इहाद्रौ उषसि प्रभाते सुरापगायां [illegible] तत्कूले सयावका सालक्तका सव्यपादस्य रेखा वामचरणमुद्रा यस्यां सा । यावोऽलक्तो द्रुमामय इत्यमरः तथा विषमाणि महदल्पानि पदानि यस्यां सा विवर्त्तनेषु प्रदक्षिणक्रियासु पदवी शिवयोः प्रदक्षिणपद्धतिरित्यर्थः सनियमयोः सन्ध्यायाम्प्रणमतोरित्यर्थः शिवा च शिवश्च तयोः शिवयोरुमाशङ्करयोः । पुमान् स्त्रियेत्येकशेषः । शरीरयोगम् अर्द्धाङ्गसङ्घटनारूपं कथयति । सनियमयोरिति नियमविषयेऽपि विरहासहाविह विहरतः शिवाविति भावः । अत्र पदवीविशेषणपदार्थयोः कथनं प्रति हेतुत्वात्काव्यलिङ्गमलङ्कारः ॥ ४० ॥

घर्मद्युतेरिह मुहुः पटलानि धाम्ना
मादर्शमण्डलनिभानि समुल्लसन्ति ॥ ४१ ॥
शुक्लैर्मयूखनिचयैः परिवीतमूर्त्ति
र्वप्राभिघातपरिमण्डलितोरुदेहः ।
[illegible]
कुर्वन वधूजनमनःसु शशाङ्कशङ्काम् ॥ ४२ ॥

सम्मूर्च्छितानामिति । इहाद्रौ रजतभित्तिमयूखजालैः सम्मूर्च्छितानां बहुलीभवताम् आलोलानां पादपलतानामन्तरशाखानां अन्तरेषु रन्ध्रेषु निर्गतानामापतितानां घर्मद्युतेरुष्णांशोर्धाम्नां तेजसाम् आदर्शमण्डलनिभानि दर्पणबिम्बसदृशानीत्युपमालङ्कारः । पटलानि मण्डलानि मुहुर्वारंवारं समुल्लसन्ति पुनः पुनः स्फुरन्ति न तु सातत्येन लतानामालोलत्वाभावात् । तच्च नान्यस्मात्पाषाणादिप्रायाणां सम्भवतीति भावः ॥ ४१ ॥

शुक्लैरिति । शुक्लैर्मयूखनिचयैः शुभ्रकिरणसमूहैः परिवीतमूर्त्तिर्व्याप्तदेहः । वप्राभिघातेन वप्रक्रीड़या परिमण्डलितो वर्तुलीकृतः उरुर्देहो महच्छरीरो यस्य तथोक्तो गणभर्तुः प्रमथनाथस्योक्षा वृषभः । उक्षानड्वान् बलीवर्दः ऋषभो वृषभो वृष इत्यमरः । वधूजनमनःसु शशाङ्कशङ्कां चन्द्रभ्रान्तिं कुर्वन् तेषां मौग्ध्यादिति भावः । अमुष्याद्रेः शृङ्गाणि भजते सेवते । अत्र शशाङ्कशङ्काया सन्दे

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः॥ ४३॥
स्नपितनवलतातरुप्रवालै
रमृतलवस्रुतिशालिभिर्मयूखैः।

इत्यर्थे सन्देहालङ्कारः। भ्रान्तिपक्षे भ्रान्तिमदलङ्कारः। यथेच्छसि तथास्तु। स चोभयविशेषणोत्थेन काव्यलिङ्गेनाङ्गाङ्गिभावेन सङ्कीर्यते॥ ४२॥

सम्प्रतीति। इन्द्राद्रौ विविधा नानावर्णाः शिखरमणिरुचः सम्प्रति शरदीत्यर्थः। लघुनि अगुरुणि कुतः क्षीणपयसि अतएव भिदां भेदम्। षिद्भिदादिभ्योऽङ् इत्यङ्प्रत्ययः॥ उपेयुषि प्राप्ते जलधरपटले मेघमण्डले कथमपि शनकैर्लब्धजन्म उत्पन्नमित्यर्थः। अतएव खण्डितविग्रहं छिन्नस्वरूपं बलभिदः इन्द्रस्य धनुः पूरयितुं विभवः समर्था भवन्ति। अत्रेन्द्रधनुषो मणिरुचीनामसम्बन्धे सम्बन्धकथनादतिशयोक्तिरलङ्कारः। वंशपत्रपतितं वृत्तम्। दिङ्मुनिवंशपत्रपतितं भरनभनलगैरिति लक्षणात्॥ ४३॥

स्नपितेति। इन्द्राद्रौ शम्भोरिन्दुलेखा स्नपितानि नवानि लतानां तरूणाञ्च प्रवालानि यैस्तैः। अमृतलवस्रुत्याऽमृतबिन्दुनिःस्यन्देन शालन्ते ये तैर्मयूखैः सततं सर्वकालम् उदिततया यामिनीषु कृष्णपक्षरात्रिष्वपि वनान्त-

सततमसितयामिनीषु शम्भो
रमलयतीह वनान्तमिन्दुलेखा ॥ ४४ ॥

क्षिपति योऽनुवनं विततां बृह
द्बृहतिकामिव रौचनिकीं रुचम् ।
अयमनेकहिरण्मयकन्दर
स्तव पितुर्दयितो जगतीधरः ॥ ४५ ॥

सक्तिं जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणिताः सहसा मयूखैः ।

अमलयति धवलयति । अन्यत्र नैतदस्तीति व्यतिरेको व्यज्यते ॥ ४४ ॥

क्षिपतीति । अथ योऽद्रिरनुवनं विततां रौचनिकीं रुचं सैवर्णीमित्यर्थः । रोचनया रक्तां रौचनिकीं लाक्षारोचनाट्ठगिति ठक् टिड्ढाणञित्यादिना ङीप् । उत्प्रेक्षते । बृहद्बृहतिकामिवोत्तरासङ्गमिव । द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथेत्यमरः । क्षिपति प्रसारयति । अनेकाहिरण्मय्यः कन्दरा यस्य सः । हिरण्मयशब्दो दाण्डिनायनेत्यादिना निपातनात्साधुः । अयम्पुरोवर्त्तिगिरिरित्यर्थः । तव पितुरिन्द्रस्य दयितः प्रियः जगत्याधरो जगतीधरः । यस्ते गन्तव्य इन्द्रकीलाख्य इत्यर्थः ॥ ४५ ॥

सक्तिमिति । असुतामुष्मिन्नद्रौ अनिले जवात् झटिति

रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तडिद्विलसितानि विडम्बयन्ति ॥४६॥
कपणकम्पनिरस्तमहाहिभिः
क्षणविमत्तमतङ्गजवर्जितैः
इह मदस्नपितैरनुमीयते
सुरगजस्य गतं हरिचन्दनैः ॥ ४७ ॥
जलदजालघनैरसिताश्मना
मुपहतप्रचयेह मरीचिभिः ।

सतानां सन्ततिम् अन्योऽन्यसङ्गमपनयति सति सहसा हठात् वैरोचनैः सावित्रैर्मयूखैर्द्विगुणिताद्विराहत्ताः शतादृति द्विगुणिताः । गुणस्त्वावृत्तिशब्दादिष्विन्द्रियामुख्यतन्तुष्विति वैजयन्ती । हिरण्मयीनां हिरण्यविकाराणाम् । दाण्डिनायनेत्यादिना निपातनात्साधुः । रोधोभुवास्तटभुवाम्भासोमुहुस्तडिद्विलसितानि विडम्बयन्ति अनुकुर्वन्तीत्यर्थः । उपमालङ्कारः ॥ ४६ ॥

कपणेति । इहाद्रौ कपणेन कण्डूयनेन यः कम्पस्तेन निरस्ता महाहयोमहासर्पायैस्तैः । क्षणं विमत्तमतङ्गजवर्जितैर्मत्तमतङ्गजरहितैः कुतः मदस्नपितैरैरावतमदसिक्तैरित्यर्थः। मितां ह्रस्वएति ह्रस्वः। हरिचन्दनैश्चन्दनद्रुमैः सुरगजस्य ऐरावतस्य गतमाप्तिरनुमायत । हरिचन्दनविशेषणैः काव्यलिङ्गमुन्नेयम् ॥ ४७ ॥

भवति दीप्तिरदीपितकन्दरा
तिमिरसंवलितेव विवस्वतः ॥ ४८ ॥
भव्योभवन्नपि मुनेरिह शासनेन
क्षात्रे स्थितः पथि तपस्य हतप्रमादः ।
प्रायेण सत्यपि हितार्थकरे विधौ हि
श्रेयांसि लब्धुमसुखानि विनाऽन्तरायैः ॥ ४९ ॥

जलदेति । इहाद्रौ जलदजालघनैर्मेघवृन्दसान्द्रैरश्मितामश्मनामिन्द्रनीलानां मरीचिभिर्दीधितिभिः। भानुः करोमरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियामित्यमरः। उपहतप्रचया विघट्टितबाहुल्या अतएवादीपितकन्दरा अप्रकाशितगह्वरा विवस्वतो दीप्तिस्तिमिरैः संवलिता व्यामिश्रितेव भवतीत्युत्प्रेक्षा ॥ ४८ ॥

भव्यइति । इहाद्रौ भव्यः शान्तोभवन्नपि मुनेर्व्यासस्य शासनेन इन्द्राराधनरूपेण क्षात्रे पथि क्षत्रियमार्गे स्थितोगृहीतशस्त्रएवेत्यर्थः । हतप्रमादोऽप्रमत्तः सन् तपस्य तपश्चर्य्याङ्कुरु । तपस्येति कर्म्मणोरोमन्थतपोभ्यां वर्त्तिचरोरिति क्यङ्। तदन्ताल्लोट् । नच सर्व्वभूतहितकारिणोमे प्रमादः किङ्करिष्यतीति विश्वासितव्यमित्यर्थान्तरन्यासेनाह । प्रायेणेति । हि यस्मात्प्रायेण बाहुल्येन । प्रायोवयस्यनशने मृतौ बाहुल्यतुल्ययोरिति हेमचन्द्रः । हितमर्थं करोतीति तस्मिन्विधौ व्यापारे सति अन्तरायैर्व्विना श्रेयांसि लब्धुमसुखानि अशक्यानीत्यर्थः ।

मा भूवन्नपथहरास्तवेन्द्रियाश्वाः
सन्तापे दिशतु शिवः शिवामशक्तिम् ।
रक्षन्तस्तपसि बलञ्च लोकपालाः
कल्याणीमधिकफलां क्रियां क्रियासुः ॥ ५० ॥

इत्युक्त्वा सपदि हितप्रियम्प्रियार्हे
धाम स्वङ्गतवति राजराजभृत्ये ।
सोत्कण्ठं किमपि पृथासुतः प्रदध्यौ
सन्धत्ते भृशमरतिं हि सद्वियोगः ॥ ५१ ॥

अतएव शकधृषेत्यादिनाऽसमानकर्तृकेषु तुमुन् । अकारणवैरिणः सर्वत्र सर्वस्यापि सन्तीति भावः ॥ ४९ ॥

माभूवन्निति । तव इन्द्रियाण्येव अश्वास्ते अपथेन हरन्तीत्यपथहरा मा भवन् त्वामपथं मा निनीषुरित्यर्थः माङि लुङित्याशीरर्थे लुङ् । सन्तापे तपःक्लेशे सति शिवः शिवां साधीयसीमशक्तिमप्रवृत्तिमुत्साहन्दिशतु । किञ्चेति चार्थः । लोकपाला इन्द्रादयः तपसि विषये बलं शक्तिं रक्षन्तो वर्द्धयन्तः सन्तः कल्याणीं साध्वीं क्रियाम् अनुष्ठानमधिकफलां क्रियासुः कुर्वन्तु । करोतेराशिषि लोट् ५०

इतीति । प्रियार्हे राजराजभृत्ये इति पूर्वोक्तम् । हितम्प्रियं वचनमिति शेषः । उक्त्वा सपदि स्वं स्वकीयन्धाम स्थानङ्गतवति सति पृथासुतोऽर्ज्जुनः सोत्कण्ठं सौत्सुक्यङ्किमपि प्रदध्यौ चिन्तयामास । तथाहि । सद्वि-

तमनतिशयनीयं सर्व्वतः सारयोगा
दविरहितमनेकेनाङ्कभाजा फलेन ।
अकृशमकृशलक्ष्मीश्चेतसा शंसितं स
स्वमिव पुरुषकारं शैलमभ्याससाद ॥ ५२ ॥

योगः सुजनवियोगोऽभ्यस्यमरतिं व्यथां सन्धत्ते करोती-
त्यर्थः । अर्थान्तरन्यासः ॥ ५१ ॥

तमिति । अकृशाः पूर्णाः लक्ष्म्यः शोभायस्य सः अकृ-
शलक्ष्मीरिति बहुवचनाश्रितोबहुव्रीहिः । एवञ्च उरः
प्रभृतिभ्यश्चेति कप्प्रत्ययानवकाशः तत्र लक्ष्मीशब्दस्यैक-
वचनान्तपाठात् । नापिनद्युतश्चेत्यस्यावकाशः उरः प्रभृ-
तिपाठसामर्थ्यादेव । शैषिकस्तु वैभाषिकइत्यविरोधः ।
सोऽर्ज्जुनः सर्व्वतः सर्व्वत सारयोगादुत्कृष्टबलप्रयोगात् ।
सारोबले स्थिरांशे च न्याय्ये क्लीवे वरे त्रिष्वित्युभयत्राप्य-
मरः । अनतिशयनीयमनतिक्रमणीयम् अनेकेन बहुना-
अङ्कभाजा समीपस्थेन शीघ्रभाविनेति यावत् । फलेन
कार्य्यसिद्ध्या अविरहितमशून्यकार्य्यसिद्धेरवश्यं साधकमि-
त्यर्थः । अकृशमतनुं चेतसा आशंसितमाप्तुमिष्टं शैलमि-
न्द्रकिलं स आत्मीयम्पुरुषस्यकारः कर्म्म तं पुरुषकारमुक्त-
विशेषणविशिष्टमौद्यमिवाभ्याससाद अधिष्ठितवान् ।
मालिनीवृत्तम् ॥ ५२ ॥

इति श्रीमहोपाध्यायभारविकृतौ किरातर्ज्जुनीये महाकाव्ये हिमवद्वर्णनं नाम पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ।

रुचिराकृतिः कनकसानुमथो
परमः पुमानिव पतिम्पतताम् ।
धृतसत्पथस्त्रिपथगामभितः
स तमारुरोह पुरुहूतसुतः ॥ १ ॥

इति श्रीमहोपाध्यायमल्लिनाथसूरिविरचितायां किरातार्ज्जुनीयव्याख्यायां घण्टापथसमाख्यायां पञ्चमः सर्गः ॥ ५ ॥

रुचिराकृतिरिति । अथो यक्षवदनानन्तरं रुचिराकृतिः सौम्यविग्रहः धृतसत्पथोऽवलम्बितसन्मार्गः आकारानुरूपगुणवानित्यर्थः । यत्राकृतिस्तत्र गुणा वसन्तीति सामुद्रिकाः । उपमानेऽपि समानमेतत् । स पुरुहूतसुतोऽर्ज्जुनः । कनकस्य विकाराः सानवो यस्य तत्कनकसानुम् । गरुड़सावर्ण्यार्थं विशेषणमेतत् । समुदायविकारषष्ठ्याश्चेति बहुव्रीहिरुत्तरपदलोपश्च । तमिन्द्रकीलम्परमः

तमनिन्द्यवन्दिन इवेन्द्रसुतं
विहितालिनिक्वणजयध्वनयः ।
पवनेरिताकुलविजिह्मशिखा
जगतीरुहोऽवचकरुः कुसुमैः ॥ २ ॥

पुमान् विष्णुः पतताम्पक्षिणाम्पतिर्गरुड इव । त्रिभिः पथिभिर्गच्छतीति त्रिपथगा भागीरथी । अन्येष्वपि दृश्यत इति डप्रत्ययः उपपदसमासश्च । तामभितोऽभिमुखमारुरोह । समीपोभयतः शीघ्रसाकल्याभिमुखेऽभित इत्यमरः । प्रमिताक्षरावृत्तम् । प्रमिताक्षरा सजससैरुदितेति लक्षणात् ॥ १ ॥

अथास्य कार्यसिद्धिनिमित्तानि सूचयन्मार्गं वर्णयति । तमिति । विहिता अलिनिक्वणा जयध्वनय इव यैस्ते तथोक्ताः । पवनेरिताः पवनेन वायुना नुन्ना अतएवाकुला लोला विजिह्मा वक्राश्च शिखाः अग्राणि येषान्ते तथोक्ताः । शिखा ज्वालाकेकिमौल्योः शिखाशाखाग्रमौलिष्विति वैजयन्ती । जगतीरुहो भूरुहः । क्विप् । अनिन्द्या अनवद्याये वन्दिनः स्तुतिपाठकास्त इव तमिन्द्रसुतमर्जुनं कुसुमैरवचकरुः अभिववृषुरित्यर्थः । ऋच्छत्यॄतामिति गुणः । अत्र किरतेर्वृष्ट्यर्थत्वात्कुसुमानाङ्करणत्वं विक्षेपार्थत्वे तु कर्मत्वमेव यथा कटाक्षान्वामा किरतीति दृश्यते च धातूनामर्थभेदात्कारकव्यत्ययः यथा सिञ्चतेः क्षरणार्द्रीकरणयोरर्थयोर्द्रवद्रव्यस्य कर्मत्वकरणत्वे यथा मेघो-

अवधूतपङ्कजपरागकणा
स्तनुजाह्नवीसलिलवीचिभिदः।
परिरेभिरेऽभिमुखमेत्य सुखाः
सुहृदः सखायमिव तं मरुतः॥ ३॥
उदितोपलस्खलनसंवलिताः
स्फुटहंससारसविरावयुजः।

ऽमृतं स्रवति गौः पयश्च स्रवति मेघा अमृतैर्वृष्टिरिति।
अत वाक्ये समासगतयोरुपमयोः साध्यसाधनभावादङ्गाङ्गि-
भावेन सङ्करः॥ २॥

अवधूतेति। अवधूताः प्रसारिताः पङ्कजपरागकणाः
यैस्ते तथोक्ताः इति सौरभ्योक्तिः। तनूर्ज्जाह्नव्याः सलि-
लवीचीर्भिन्दन्तीति तथोक्ताः इति शैत्योक्तिः। सुखयन्तीति
सुखाः सुखस्पर्शी इति मान्द्योक्तिः। पचाद्यच्। मरुतो
वाताः तमर्ज्जुनं सुहृदः सखायमिवाभिमुखमेत्यागत्य
परिरेभिरे आलिङ्गितवन्तः॥ ३॥

उदितेति। उदितोपलेषून्नतपाषाणेषु स्खलनेन प्रति-
घातेन संवलितास्संमिलिताः अतस्तूर्य्यघोषद्भूत धमधुमाय-
मानादत्यर्थः स्फुटैर्हंसानां सारसानाञ्च विरावैर्युज्यन्त
इति तथोक्ताः। क्विप्। अनुवप्रमप्रासन्नः पतन्तीनामिति
शेषः। ध्वनयोऽस्यार्ज्जुनस्य मङ्गलप्रयोजनमेषामस्ते माङ्ग
लिकाः। प्रयोजनमिति ठञ्। तैस्तूर्य्यैः कृतां मुदं हर्षमा-

मुदमस्य माङ्गलिकतूर्य्यकृतां
ध्वनयः प्रतेनुरनुप्रममपाम् ॥ ४ ॥
अवरुग्णतुङ्गसुरदारुतरौ
निचये पुरः सुरसरित्पयसाम् ।
स ददर्श वेतसवनाचरिता-
मपतिम्बलीयसि समृद्धिकरीम् ॥ ५ ॥
प्रबभूव नालमवलोकयितु
म्परितः सरोजरजसाऽरुणितम् ।

तेनुः । अत्रान्यस्यान्यकार्य्यकरणासम्भवात् तूर्य्यकृतमुत्कृष्टीं मुदमिति प्रतिबिम्बेनाक्षेपान्निदर्शनालङ्कारः ॥४॥

अवरुग्णेति । सोऽर्ज्जुनः पुरोऽग्रे अवरुग्णतुङ्गसुरदारुतरौ भग्नोन्नतदेवदारुद्रुमे बलीयसि बलवत्तरे। मत्वन्तादीयसुनि विन्मतोर्लुगिति मतोर्लुक्। सुरसरित्पयसान्निचये पुरे विषये वेतसवनेन. वानीरवनेनाचरिताम्। अथ वेतसे रथाभ्रपुष्पविदुलशीतवानीरवंजुला इत्यमरः। समृद्धिकरीं श्रेयस्करीं लोके यया दृष्टामित्यर्थः। अप्रतिन्ददर्श। या सर्व्वलोकदृष्टान्तभूतेति भावः ॥५॥

प्रबभूवेति । सोऽर्ज्जुनः परितः सरोजरजसा कमलरेणुनाऽरुणितं पाटलितम् उत्तरीयञ्च कुसुमादिना परिणितं संहतिमन्नीरन्ध्रन्तरङ्गभङ्गि वारितरङ्गशोभि सरित उत्तरीयं स्नानांशुकमिव स्थितं कलहंसकुलं कादम्बकुलं

सरिदुत्तरीयमिव संहतिम
त्स तरङ्गभङ्गि कलहंसकुलम् ॥ ६ ॥
दधति क्षतीः परिणतद्विरदे
मुदितालियोषिति मदस्रुतिभिः।
अधिकां स रोधसि बबन्ध धृतिं
महते रुजन्नपि गुणाय महान् ॥ ७ ॥
अनुहेमवप्रमरुणैः समता
ङ्गतमूर्म्मिभिः सहचरम्पृथुभिः।

मवलोकयितुमलमत्यर्थन्न बभूव न प्रापाक तत्सौन्दर्य्यैका-
द्वैतत्वादिति भावः ॥ ६ ॥

दधतीति। सोऽर्ज्जुनः क्षतीः क्षतानि दधति धार-
यति कुतः परिणतास्तिर्य्यग्दन्तप्रहारिणोद्विरदायस्मिं-
स्तस्मिन्। तिर्य्यग्दन्तप्रहारस्तुगजः परिणतोमतइति
हलायुधः। मदस्रुतिभिर्मुदितालियोषिति रोधस्यधिका-
न्धृतिं प्रीतिम्बबन्ध निश्चलीकृतवानित्यर्थः। तथाहि।
महान् जनोरुजन्पीडयन्नपि महते गुणायोत्कर्षाय
भवति। महत्कृता पीडापि शुभावहैवेत्यर्थः। तद्युक्तं
गजरुग्णस्यापि रोधसः प्रीतिकरत्वमिति भावः ॥ ७ ॥

अन्विति। सोऽर्ज्जुनोऽनुहेमवप्रङ्कनकसानुसमीपे।
समीपार्थेऽव्ययीभावः। अरुणैः कनककान्त्युपरञ्जनादिति
भावः। पृथुभिरूर्म्मिभिः समतान्तुल्यरूपताङ्गतम्। साह-

स रथाङ्गनामवनिताङ्करुणै
रनुबध्नतीमभिननन्द रुतैः ॥ ८ ॥

सितवाजिने निजगदू रुचय
श्चलवीचिरागरचनापटवः ।
मणिजालमम्भसि निमग्नमपि
स्फुरितं मनोगतमिवाकृतयः ॥ ९ ॥

स्यादुर्वचनीयमिति भावः । सहभूतं सहचरं प्रियं सह-शब्दस्य पचाद्यजन्तेन चरशब्देन समासः । करुणैर्दीनैः रुतैः कूजितैरनुबध्नतीमन्विष्यन्तीं रथाङ्गनामवनितां चक्रवाकस्त्रि यमभिननन्द प्रकृष्टप्रेमदर्शनात्कस्य नानन्द इति भावः । अत्र तावदूर्मीणां स्वधावल्यत्यागेनारुण्यस्वीकारात्तद्गुणा-लङ्कारः । तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणाश्रयादिति लक्षणात् तन्मूला चेयं चक्रवाक्याः स्वकान्ते तरङ्गभ्रान्तिरिति तद्गुणभ्रान्तिमतोरङ्गाङ्गिभावेन सङ्करः ॥ ८ ॥

सितवाजिन इति । चलवीचीनां रागो रञ्जनं वर्णान्त-रापादनं तस्य रचना क्रिया तत्र पटवः समर्थाः रुचयः प्रभा अम्भसि निमग्नमपि मणिजालं स्वाश्रयगतमिति भावः । मनोगतं स्फुरितं रोमादिविकारमाकृतयो भ्रूभ-ङ्गादिवाह्यविकारा इव सितवाजिनेऽर्जुनाय निजगदुः ज्ञापयामासुरित्यर्थः आकृत्या हि मनोगतं विचक्षणा जा-नन्तीति भावः ॥ ९ ॥

उपलाहतोद्धततरङ्गधृत
ज्जविना विधूतविततं मरुता ।
स ददर्श केतकशिखाविशदं
सरितः प्रहासमिव फेनमपाम् ॥ १० ॥

बहुवर्हिचन्द्रकनिभम्बिदधे
धृतिमस्य दानपयसाम्पटलम् ।
अवगाढमीक्षितुमिवेभपतिं
विकसद्विलोचनशतं सरितः ॥ ११ ॥

उपलेति । उपलैराहताश्चतएवोद्धताश्च ये तरङ्गास्तैः धृतं निर्गमरोधादित्यर्थः । जविना वेगवता मरुता वातेन विधूतं विततञ्च केतकस्य शिखा तद्वद्विशदमपाम्फेनं हिण्डीरम् । हिण्डीरोऽब्धिकफः फेनइत्यमरः । सरितः प्रहासमट्टहासमिवेत्युत्प्रेक्षा । सोऽर्जुनोददर्श ॥ १० ॥

बर्हेति । बर्हिचन्द्रकनिभं मयूरमेचकसदृशम् । समौ चन्द्रकमेचकावित्यमरः । बहु अनेकधा दानपयसाम्पटलम् । जातावेकवचनम् । बहवोमदाम्बुबिन्दवइत्यर्थः । अवगाढमन्तः प्रविष्टम् । गाहेः कर्त्तरि क्तः । इभपतिमीक्षितुं विकसद्भिर्विस्तारितोविलोचनशतमिवेत्युत्प्रेक्षा अस्यार्जुनस्य धृतिम्प्रीतिं विदधे ॥ ११ ॥

प्रतिबोधेति । प्रतिबोधः स्फुटनन्निद्रापगमश्च तत्र यज्जृम्भणमङ्कूनता जृम्भा च तेन विभिन्नमुखो विशिष्टाग्रा

प्रतिबोधजृम्भणविभिन्नमुखी
पुलिने सरोरुहदृशा ददृशे।
पतदच्छमौक्तिकमणिप्रकरा
गलदश्रुबिन्दुरिव शुक्तिवधूः॥ १२॥

शुचिरप्सु विद्रुमलताविटप
स्तनुसान्द्रफेनलवसम्वलितः।
स्मरदायिनः स्मरयति स्म भृश
न्दयिताधरस्य दशनांशुमतः॥ १३॥

विवृत्तास्या च अतएव पतन् प्रसरन् अच्छो मौक्तिकमणीनाम्प्रकरः स्तोमो यस्याः सा तथोक्ता अतएव गलदश्रुबिन्दुरिव स्थितेत्युत्प्रेक्षा। शुक्तिर्वधुरिव पुलिने शयनीय इवेति भावः। सरोरुहदृशाऽर्जुनेन ददृशे दृष्टा अत्र प्रतिबोधादिविशिष्टपदोपात्तानां प्रकृतानां शुक्तिवध्वोरुपमारूपकयोः साधकबाधकाभावात्सन्देहालङ्कारस्तत्सापेक्षा चाश्रुगलनोत्प्रेक्षेति तयोरङ्गाङ्गिभावः॥ १२॥

शुचिरिति। अप्सु शुचिः स्वच्छः तनुना सान्द्रेण च फेनस्य लवेन शकलेन सम्वलितः सङ्गतो विद्रुमलतायाः विटपः पल्लवः। विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोरिति विश्वः। स्मरदायिनः कामोद्दीपकस्य दशनांशुमतो दन्तकान्तिकलितस्येत्यर्थः। दयिताधरस्य। अधीगर्थेत्यादिना षष्ठी। भृशं स्मरयति स्म। लट् स्मे इति भूतार्थे लट् मितां ह्रस्व इति ह्रस्वः। स्मरणालङ्कारः॥ १३॥

उपलभ्य चञ्चलतरङ्गधृतं
मदगन्धमुत्थितवतां पयसः ।
प्रतिदन्तिनामिव स सम्बुबुधे
करियादसामभिमुखान् करिणः ॥ १४ ॥

स जगाम विस्मयमुदीक्ष्य पुरः
सहसा समुत्पिपतिषोः फणिनः ।
प्रहितन्दिवि प्रजविभिः श्वसितैः
शरदभ्रविभ्रममपाम्पटलम् ॥ १५ ॥

उपलभ्येति । सोऽर्जुनश्चञ्चलतरङ्गैर्धृतन्तत्संक्रान्तमित्यर्थः । मदगन्धमुपलभ्याघ्राय पयसः उत्थितवतां रोषादिति शेषः । करिणां यादसाम् । शाकपार्थिवादिषु द्रष्टव्यः । प्रतिदन्तिनामिवाभिमुखानभियातानित्यर्थः । करिणः सम्बुबुधे ददर्शेत्यर्थः ॥ १४ ॥

स इति । सोऽर्जुनः पुरोऽग्रे सहसा समुत्पिपतिषोः समुत्पतितुमिच्छोः । पतेः सन्नन्तादुप्रत्ययः तनिपतिदरिद्रातिभ्यः सनइड्वा वक्तव्यइति विकल्पादिडागमः । फणिनः प्रजविभिरतिवेगवद्भिः श्वसितैः फूत्कारैर्दिवि आकाशे प्रहितम्प्रेरितं शरदभ्रस्य विभ्रमइव विभ्रमः सौन्दर्यं यस्य तत् शुभ्रमव्यापकञ्चेत्यर्थः । अपाम्पटलम्पुर उदीक्ष्य विस्मयञ्जगाम । अत्रोपमानुप्राणितास्वभावोक्तिरलङ्कारः ॥ १५ ॥

स ततार सैकतवतीरभितः
शफरीपरिस्फुरितचारुदृशः ।
ललिताः सखीरिव बृहज्जघनाः
सुरनिम्नगामुपयतीः सरितः ॥ १६ ॥

अधिरुह्य पुष्पभरनम्रशिखैः
परितः परिष्कृततलान्तरुभिः ।
मनसः प्रसत्तिमिव मूर्ध्नि गिरेः
शुचिमाससाद स वनान्तभुवम् ॥ १७ ॥

सइति । सोऽर्ज्जुनः सैकतवतीः पुलिनवतीरभितः शफ-रीणां प्रोष्ठीनां परिस्फुरितान्येव चारवो दृशो यासान्ताः सुरनिम्नगां गङ्गामुपयतीर्भजन्तीः । इयाः शत्रुदगितत्वात् ङीप् । अतएव बृहज्जघनाललिताः सखीरिव स्थिताः सरितस्ततार अभिचक्रमे ॥ १६ ॥

अधिरुह्येति । सोऽर्ज्जुनोऽधिरुह्य अर्थात् गिरिमिति शेषः । पुष्पभरेण नम्रशिखैर्नताग्रैस्तरुभिः परितः परिष्कृततलाम्भूषितस्वरूपाम् । अधःस्वरूपयोरस्त्रीतलमि-त्यमरः । सम्पर्युपेभ्यः करोतौ भूषणे इति सुडागमः । शुचिं शुद्धाम् अतएव मनसः प्रसत्तिमिव मूर्त्तं मनःप्रसाद-मिव स्थितान्तद्धेतौ तद्भावोत्प्रेक्षा । गिरेर्मूर्ध्नि वनान्त-भुवमाससाद । अन्तःशब्दः स्वरूपवचनः । अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चये,न्तिकइति वैजयन्ती ॥ १७ ॥

अनुसानु पुष्पितलताविततिः
फलितोरुभूरुहविविक्तवनः।
धृतिमाततान तनयस्य हरेः
स्तपसेऽधिवस्तुमचलामचलः॥ १८ ॥

प्रणिधाय तत्र विधिनाथ धिय
न्दधतः पुरातनमुनेर्मुनिताम्।
श्रममादधावसुकरं न तपः
किमिवावसादकरमात्मवताम् ॥१९॥

अनुसान्विति। अनुसानु प्रतिसानु वीप्सार्थेऽव्ययीभावः। पुष्पिताः संजातपुष्पाः लताविततयो यस्मिन्सः फलिताः उरुभूरुहाः येषु तानि विविक्तानि विजनानि पूतानि वा वनानि यस्मिन्स तथोक्तः। विविक्तौ पूतविजनावित्यमरः। अचल इन्द्रकीलः हरेस्तनयस्यार्जुनस्य तपसे तपश्चर्यार्थमधिवस्तुमधिष्ठातुम्। क्रियार्थेच्चया समानकर्तृकत्वात्तुमुन्। अचलां स्थिरां धृतिमुत्साहमाततान। अत्राचलविशेषणपदार्थस्य धृतिकरणहेतुत्वात्काव्यलिङ्गमलङ्कारः॥ १८ ॥

प्रणिधायेति। अथ तत्राद्रौ विधिना योगशास्त्रानुसारेण धियश्चित्तवृत्तिम्प्रणिधाय ध्येयविषये धियं नियम्य। नेर्गदेत्यादिना णत्वम्। मुनितान्दधतस्तपस्यतइत्यर्थः। पुरातनमुनेरर्जुनस्येत्यर्थः। असुकरं दुष्करन्तपः श्रमं खेद-

शमयन् धृतेन्द्रियशमैकसुखः
शुचिभिर्गुणैरघमयं स तमः ।
प्रतिवासरं सुकृतिभिर्व्ववृधे
विमलः कलाभिरिव शीतरुचिः ॥ २० ॥

अधरीचकार च विवेकगुणा-
दगुणेषु तस्य धियमस्तवतः ।

न्नादधौ न चकार । तथाहि आत्मवतामनस्विनाम् अव-
साद्‌करमशान्तिजनकमिव न किञ्चिदित्यर्थः । इव
शब्दोवाक्यालङ्कारे ॥ १९ ॥

शमयन्निति । धृतमिन्द्रियशमोविषयव्यावृत्तिरेवैक-
मुख्यं सुखम् आह्लादोयेन तथोक्तः आत्मारामइत्यर्थः ।
अन्यत्र धृतं कृतमिन्द्रियशमः सन्तापनिवर्त्तनमेकमद्वितीयं
सुखमाह्लादश्च येन स तथोक्तः । शुचिभिः शुद्धैर्गुणै-
र्वैराग्यादिभिरन्यत्र कान्त्यादिभिरघमयम्पापरूपन्तमः अज्ञा-
नमन्यत्रान्धकारश्च शमयन्निवर्त्तयन् । विमलोऽमलिनः
पापरहितः शुभ्रोऽन्यत्र सोऽर्ज्जुनः प्रतिवासरं सुकृतिभिः
सुकृतैस्तपोभिरित्यर्थः स्त्रियां क्तिन् । कलाभिः शीत-
रुचिश्चन्द्रइव ववृधे ॥ २० ॥

अधरीचकारेति । किञ्चेति चार्थः विवेकस्तत्त्वावधारणं
सएव गुणस्तस्मात्तेन हेतुनेत्यर्थः । विभाषागुणेऽस्त्रि-याः
मिति पञ्चमी । अगुणेषु कामक्रोधादिदोषेषु विषयेषु ।
तद्विरोधेन नञ् समासः । धियश्चित्तवृत्तिमस्तवतीमिवा-

प्रतिघातिनीं विषयसङ्गरति
न्निरुपप्लवः शमसुखानुभवः ॥ २१ ॥
मनसा जपैः प्रणतिभिः प्रयत
स्समुपेयिवानधिपतिं स दिवः ।
सहजेतरौ जयशमौ दधती
बिभराम्बभूव युगपन्महसी ॥ २२ ॥

रितवतस्तस्यार्ज्जुनस्य निरुपप्लवोनिर्ब्बाधः शमसुखानुभवः शान्त्यानन्दानुभवः प्रतिघातिनीं सोपप्लवां विषयसङ्गरतिं शब्दाद्युपभोगरुचिमधरीचकार विषयनिस्पृहञ्चकारे-त्यर्थः । उत्कृष्टसुखलाभस्य अपकृष्टवैराग्यहेतुत्वादिति भावः ॥ २१ ॥

मनसेति । प्रयतः अहिंसादिनिरतोमनसा ध्यानेन जपैर्विशिष्टमन्त्राभ्यासैः प्रणतिभिर्नमस्कारैः एवं मनोवा-कायकर्म्मभिर्दिवोधिपतिमिन्द्रं समुपेयिवान् उपसेदिवान् सोऽर्ज्जुनः सहजेतरौ नैसर्गिकागन्तुकौ जीयते अनेनेति जयोवीररसः । एरजित्यच् । शम्यतेऽनेनेति शमः जय-शमौ वीरशान्तिरसौ दधती पुष्णती महसी तेजसी युगपद्बिभराम्बभूव बभार । भीह्रीभृहुवामिति विकल्पा-दाम्प्रत्ययः । अत्र युगपद्वीरशान्ताधिकरणत्वाभिधाना-दस्य लोकाद्भुतमहिमत्वं व्यज्यते ॥ २२ ॥

शिरसेति । हरिन्मणिनिभोमरकतमणिश्यामः अभि-

शिरसा हरिन्मणिनिभः स वहन्
कृतजन्मनोऽभिषवणेन जटाः ।
उपमां ययावरुणदीधितिभिः
परिमृष्टमूर्द्धनि तमालतरौ ॥ २३ ॥

धृतहेतिरप्यधृतजिह्ममति
श्चरितैर्मुनीनधरयन् शुचिभिः ।
रजयाञ्चकार विरजाः स मृगान्
कमिवेशते रमयितुन्न गुणाः ॥ २४ ॥

षवणेन स्नानेन कृतजन्मनो जनिताः अतः पिशङ्गीरि
भावः । जटाः शिरसा वहन् सोऽर्ज्जुनोऽरुणस्यानूरोर्दी
तिभिः परिमृष्टमूर्द्धनि व्याप्तशिरसि तमालतरौ उपमां
त्तमालतरोः सादृश्यं ययावित्यार्थीसुपमा । तरोरौ
स्याधिकरणत्वात्तदपेक्षया सप्तमी ॥ २३ ॥

धृतेति । धृतहेतिर्धृतायुधोऽपि अधृता जिह्ममति
कुटिलमतिर्येन सः शुचिभिः चरितैः मुनीनधरयन् तिर
स्कुर्वन् । वेषेणैव भीषणेन तु कर्म्मणेति भावः । कुतो
विरजाः रजोगुणरहितः सोऽर्ज्जुनो मृगान् रजयाञ्चका
रमयामास । रञ्जेर्णौ मृगरमणे नलोपो वक्तव्य इति नलो
पः । तथाहि गुणाः दयादयः कमिव रमयितुं न ईशते
कं वा वशीकर्तुन्न प्रभवन्तीति भावः । शुद्धिरेव हि प्र
विश्वासबीजम्परस्य न वेषो नापि संस्तव इति भावः ॥२४॥

अनुकूलपातिनमचण्डगतिं
किरता सुगन्धिमभितः पवनम् ।
अवधीरितार्त्तवगुणं सुखतां
नयता रुचां निचयमंशुमतः ॥ २५ ॥

नवपल्लवाञ्जलिभृतः प्रचये
बृहतस्तरून् गमयतावनतिम् ।
स्तृणता तृणैः प्रतिनिशं मृदुभिः
शयनीयतामुपयतीं वसुधाम् ॥ २६ ॥

अथास्य त्रिभिः तपःसिद्धिमाह । अनुकूलेत्यादिना । अनुकूलपातिनन्नतु प्रतिकूलपातिनमचण्डगतिं मन्दगामिनं सुगन्धिम् । गन्धस्येत्वे तदेकान्तग्रहणेऽपि कवीनां निरङ्कुशत्वात्समासान्तः । अथवा केचिदागन्तुकत्वेऽप्येकवचनेन समासान्तमिच्छन्ति । पवनमभितः किरता प्रवर्त्तयतेत्यर्थः । ऋतुरस्य प्राप्तः आर्त्तवः । ऋतोरणित्यण्प्रत्ययः । स चासौ गुणस्तिग्मत्वरूपः सोऽवधीरितस्तिरस्कृतो यस्य तम् अंशुमतो रुचान्निचयं सुखतां सुखस्पर्शतान्नयता प्रापयता । नयतेर्द्विकर्मकत्वम् ॥ २५ ॥

नवेति । प्रचये पुष्पावचयप्रसङ्गे नवपल्लवाएवाञ्जलयस्तान् बिभ्रतीति तथोक्तान् बृहतः उच्चांस्तरूनवनतिङ्गमयता । गतिबुद्धीत्यादिना तरूणाङ्कर्मत्वम् । प्रतिनिश

पतितैरपेतजलदान्नभसः
पृषतैरपां शमयता च रजः ।
स दयालुनेव परिगाढकृशः
परिचर्य्ययानुजगृहे तपसा ॥ २७ ॥
महते फलाय तदवेक्ष्य शिवं
विकसन्निमित्तकुसुमं स पुरः ।
न जगाम विस्मयवशं वशिनां
न निहन्ति धैर्य्यमनुभावगुणः ॥ २८ ॥

निशि निशि शयनीयतामुपयतीं शयनस्थानीभूतामित्यर्थः वसुधां मृदुभिस्तृणैः स्तृणता आच्छादयता ॥ २६ ॥

पतितैरिति । अपेतजलदान्निरभ्रान्नभसः पतितैरपाम्पृषतैर्जलविन्दुभिः रजश्च शमयता तपसा कर्त्रा दयालुनेवेत्युत्प्रेक्षा। दयालुत्वं सूचयति । परिगाढकृशोऽतिक्षीणः सोऽर्ज्जुनः परिचर्य्यया उक्तविधया शुश्रूषया अनुजगृहे-ऽनुगृहीतः। अनुग्रहोऽत्र सहकारित्वमेव सर्व्वभूतानुकूल्यलिङ्गात्यचेलिमन्तपोऽस्येति भावः। अत्र श्लोकद्वयस्याप्येकवाक्यत्वादुत्प्रेक्षैव प्रधानालङ्कारः ॥ २७ ॥

महतदिति । सोऽर्ज्जुनोमहते फलाय श्रेयसे प्रसाय च विकसत्पूर्व्वोक्तं शिवन्निमित्तमेव कुसुमं पुरोऽग्रेऽवेक्ष्य विस्मयवशं न जगाम । तथाहि । वशिनामनुभावएव गुणः स च धैर्य्यं न निहन्ति विस्मयादिविकारं न जन-

तदभूरिवासरकृतं सुकृतै-
रुपलभ्य वैभवमनन्यभवम्।
उपतस्थुरास्थितविषाददियः
शतयज्वनो वनचरा वसतिम्॥ २८॥

विदिताः प्रविश्य विहितानतयः
शिथिलीकृतेऽधिकृतकृत्यविधौ।

यर्त त्यर्थः। तपः चरति विस्मयादिति त्वरत्वादिति भावः॥ २८॥

तदिति। सुकृतैस्तपोभिः करणैरभूरिभिः कतिपयैरेव वासरैः कृतन्तत्पूर्वोक्तं वैभवमतोऽन्यस्य न भवतीत्यनन्यभवमन्यस्यासाध्यमित्यर्थः। पश्चाद्युजन्तोत्तरपदेन समासः उपलभ्य निश्चित्य आस्थितविषादाः प्राप्तखेदाः धियो येषान्ते वनचराः। तत्पुरुषे कृति बहुलमिति बहुलग्रहणादलुक्। शतेन शतस्य वा मखानां यज्वनः शतक्रतोः। अत्र सङ्ख्येयविशेषलाभो यजिसन्निधानादवगन्तव्यः। यज्वा तु विधिनेष्टवानित्यमरः। सुयजोर्ङ्वनिप्। वसतिमुपतस्थुः प्रापुः॥ २९॥

विदिता इति। वनचरा इत्यनुवर्त्तनीयम्। विदिताः ज्ञाताः अनमतप्रवेशाः सन्त इत्यर्थः। प्रविश्य विहितानतयः कृतप्रणामाः अधिकृतकृत्यस्य नियुक्तकर्मणः शैलरक्षणात्मकस्य विधावनुष्ठाने शिथिलीकृते सति अनपेत-

अनपेतकालमभिरामकथाः
कथयाम्बभूवुरिति गोत्रभिदे ॥ ३० ॥
शुचिवल्कवीतवपुरन्यतम
स्तिमिरच्छिदामिव गिरौ भवतः ।
महते जयाय मघवन्ननघः
पुरुषस्तपस्यति तपन् जगतीम् ॥ ३१ ॥
स बिभर्त्ति भीषणभुजङ्गभुजः
पृथु विद्विषान्द्यविधायि धनुः ।

कालमनतिक्रान्तकालं यथा तथा गोत्रभिदे शक्राय इति वक्ष्यमाणप्रकारेण अभिरामकथाः आव्यवाचः । चिन्तिपूजिकथिकुम्बिचर्चश्चेत्यङ् प्रत्ययः । कथनाम्बभूवुः ॥ ३० ॥

शुचीति । शुचिना वल्केन वल्कलेन वीतमाच्छादितं वपुर्यस्य सः । तिमिरच्छिदां सूर्यादीनामन्यतमइव स्थितइत्युत्प्रेक्षा । अनघः पुरुषः हे मघवन् भवतोगिरौ इन्द्रकीले जगतीं भवन्तपन् तापयन्महते जयाय तपस्यति तपश्चरति । कर्म्मणोरोमन्थेत्यादिना क्यङ् लट् ॥ ३१ ॥

जयाय तपस्यतीत्युक्तन्तत्र हेतुमाह । सइति । भीषयेते इति भीषणौ । नन्द्यादित्वात् ल्युप्रत्ययः । तौ च तौ भुजङ्गौ च ताविवभुजौ यस्य स तथोक्तः पुरुषोविद्विषान्ध्यविधायि पृथु धनुर्बिभर्त्ति अतोजयार्थीत्यर्थः । अमलेन

असमलेन तस्य धृतसच्चरिता
श्चरितेन चातिशयिता मुनयः ॥ ३२ ॥

मरुतः शिवा नवतृणा जगती
विमलं नभो रजसि वृष्टिरपाम् ।
गुणसम्पदाऽनुगुणतां गमितः
कुरुतेऽस्य भक्तिमिव भूतगणः ॥ ३३ ॥

द्रुतरेतरानभिभवेन मृगा
स्तमुपासते गुरुमिवान्तसदः ।

तस्य पुरुषस्य चरितेन धृतानि सच्चरितानि यैस्ते मुनयोऽतिशयिता अतिक्रान्ताः ॥ ३२ ॥

अथास्य तपःसिद्धिं वर्णयति । मरुत इत्यादिना । मरुतो वाताः शिवाः सुखाः जगती पृथ्वी नवतृणा शयनासनाद्यनुकूलेत्यर्थः । नभो विमलं नीहारादिरहितं रजसि सति अपां वृष्टिर्भवतीति शेषः । किम्बहुना अस्य पुरुषस्य गुणसम्पदा भूतहितादिगुणसम्पत्त्या अनुगुणतामनुकूलतां गमितो वशीकृत इत्यर्थः । भूतगणः पृथिव्यादिपञ्चकं भक्तिं सेवां कुरुत इवेत्युत्प्रेक्षा ॥ ३३ ॥

द्रुतरेतरेति । किञ्च मृगाः पशवस्तम् अन्तेऽन्तिके सीदन्तीत्यन्तसदोऽन्तेवासिनः । सत्सूद्विषेति क्विप् । गुरुमिव द्रुतरेतरेषामनभिभवेनाद्रोहेणोपासते सेवन्ते । प्रचये पुष्पावचये तरवोऽस्य विनमन्ति करप्रचेयाभवन्तीत्यर्थः ।

त्रिनमन्ति चास्य तरवः प्रचये
परवान्स तेन भवतेव नगः ॥३४॥
उरु सत्त्वमाह विपरिश्रमता
परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने
विभुतानुषङ्गि भयमेति जनः ॥३५॥
ऋषिवंशजः स यदि दैत्यकुले
यदि वान्वये महति भूमिभृताम् ।

अस्येति सम्बन्धसामान्ये षष्ठी । किम्बहुना । स नग इन्द्र-कीलोभवतेव तेन परवान् पराधीनः सात्त्विकस्यापि तवैव तस्यातिशयोवर्त्ततइत्यर्थः ॥ ३४ ॥

उर्व्विति । किञ्च विपरिश्रमता आयासेऽपि श्रमराहित्यम् । उरु महत्सत्त्वमन्तःसारमाह दुर्बलस्य श्रमजयासम्भवादिति भावः । परमं वपुः जयस्य प्रथयति च आकारेणैव जिष्णुत्वङ्गम्यते इत्यर्थः । शमिनः शान्तस्यापि तस्य नवसङ्गमनेऽपूर्व्वप्राप्तौ जनोविभुतायाः प्रभावस्यानुषङ्गि व्यापकं नतु हिंस्रकत्वानुषङ्गीति भावः भयमेति । शान्तोऽप्ययम्पराभवङ्गमयतीति भावः ॥३५॥

अथेदृशोऽसौ कइति चेत्तन्न विद्मइत्याह । ऋषीति । स पुरुषः ऋषिवंशजोवेति शेषः काकुर्व्वा । यदिवा दैत्यकुले जातइति शेषः । यदिवा महति भूमिभृतामन्वये

चरतस्तपस्तव वनेषु सहा
न वयन्निरूपयितुमस्य गतिम् ॥ २६ ॥
विगणय्य कारणमनेकगुणं
निजयाथवा कथितमल्पतया ।
असदप्यदः सहितुमर्हसि नः
क्व वनेचराः क्व निपुणामतयः ॥ २७ ॥
अधिगम्य गुह्यकगणादिति त
न्मनसः प्रियम्प्रियसुतस्य तपः ।

जातः । तत्र वनेषु तपश्चरतोऽस्य गतिं स्वरूपं निरूपयितुं वयं सहन्त इति सहाः । पचाद्यच् । न सहाः स्म इति शेषः ॥ २६ ॥

अदृष्टपरिभाषणापराधम्परिहरति । विगणय्येति । अनेकगुणं बहुफलम् इन्द्रत्वाद्यनेकफलसाधकत्वेन योग्यमित्यर्थः । कारणन्तपोरूपं विगणय्य विचार्य्य अथवा निजया नैसर्गिक्या अल्पतया वालिश्येन वा कथितं नीऽस्माकम् अदः इदं वचनमित्यर्थः । असदसाध्वपि सहितुं सोढुम् । तीषसहेत्यादिना विकल्पादिडागमः । अर्हसि योग्योऽसि । तर्हि सदेव किन्नोक्तन्तत्राह । वनेचराः क्व निपुणामतयोविवेकबुद्धयः क्व नोभयं सङ्गच्छत इत्यर्थः । अज्ञानेनापराध्यन्तीति भावः । अर्थान्तरन्यासोऽलङ्कारः ॥ २७ ॥

अधिगम्येति । मघवा इन्द्र इति पूर्वोक्तगुह्यकगणात्त-

निजुगोप हर्षमुदितं मघवा
नयवर्त्मगाः प्रभवतां हि धियः ॥ २८ ॥
प्रणिधाय चित्तमथ भक्ततया
विदितेऽप्यपूर्व इव तत्र हरिः ।
उपलब्धुमस्य नियमस्थिरतां
सुरसुन्दरीरिति वचोऽभिदधे ॥ २९ ॥
सुकुमारमेकमणु मर्मभिदा
मतिदूरगं युतममोघतया ।

मघवः प्रियम्प्रियसुतस्यार्जुनस्य तपः अधिगम्य ज्ञात्वा। सुतत्वापेक्षया समानकर्तृकत्वात् ल्यप् निर्देशः। उदितं तत्तपसो देवकार्यार्थत्वादुत्पन्नं हर्षं निजुगोप गोपयामास। तथा हि। प्रभवतां प्रभूणां धियो नयवर्त्मगामिनीतिमार्गानुसारिण्यो हि। अन्यथा मन्त्रभेदे कार्यहानिः स्यादिति भावः ॥ २८ ॥

प्रणिधायेति। अथ हरिरिन्द्रश्चित्तम्प्रणिधाय विषयान्तरपरिहारेण आत्मन्यवस्थाप्य तत्र तस्मिन्नर्जुने भक्ततया विदिते सत्यपि। उपलक्षणे तृतीया। अपूर्व इवाविदित इवेत्यर्थः। पूर्वादिभ्यो नवभ्यो वेति विकल्पान्नस्मिन्नादेशः। अस्यार्जुनस्य नियमे स्थिरतान्दार्ढ्यमुपलब्धुम्परीक्षितुमित्यर्थः। लोकप्रतीत्यर्थमिति भावः। सुरसुन्दरीरिति वक्ष्यमाणप्रकारं वचोऽभिदधे ॥ २९ ॥

सुकुमारमिति। मर्मभिदां मर्मच्छेदिनामस्त्राणां

अविलङ्घ्यमस्त्रमपरं कृतमं
विजयाय यूथमिव चित्तभुवः॥ ४०॥
भववीतये हतबृहत्तमसा-
मवबोधवारि रजसः शमनम्।
परिपीयमाणमिव वोऽसकलै-
रवसादमेति नयनाञ्जलिभिः॥ ४१॥

सप्यङ्कत्यर्थः। यतश्च निर्द्धारणमिति षष्ठी। अपरमन्यत् कथं वा बहूनां जातिपरिप्रश्ने डतमच्। यूथमिव सुकुमारं न तु कठिनम्। अन्यत्तु कठिनम्भवति। तथा एकं न बहु तत्तु अनेकम्भवति तथाऽणु सूक्ष्मं न स्थूलम् अलक्ष्य प्रवेशित्वादिति भावः। तत्तु लक्ष्यप्रवेशि। तथा अतिदूरगं दूरलक्ष्यभेदि तत्तु समीपलक्ष्यभेदि। तथा अमोघ- तया अमोघत्वगुणेन युतं युक्तन्न कदाचिद्व्यभिचरतीति भावः। अन्यत्तु कदाचिदपि लक्ष्यादपराध्यति। तथा अविलङ्घ्यमसत्प्रतिकारम्। अन्यद्विद्यमानप्रतीकारम् अस्य चित्तभुवः कामस्य। कर्त्तरि षष्ठी। विजयाय अस्तीति शेषः। न किञ्चिदस्तीत्यर्थः। अत्रोपमालङ्कारः। साभिप्रायविशेषणत्वात्परिकरालङ्कारश्च। तयोरुभयोरङ्गाङ्गिभावेन सङ्करः॥ ४०॥

असामर्थ्यशङ्काम्परिहरति। भवेति। भववीतये संसारनिवृत्तये हतबृहत्तमसां निरस्तमहामोहानां योगिनां सम्बन्धि रजोगुणः रजोधूलिरिति श्लिष्टरूपकं तस्य शमन-

बहुधा गतां जगति भूतसृजा
कमनीयतां समभिहृत्य पुरा।
उपपादिता विदधता भवतीः
सुरसद्मयानसुमुखी जनता ॥ ४२ ॥
तदुपेत्य विघ्नयत तस्य तपः
कृतिभिः कलासु सहिताः सचिवैः।

न्निवर्त्तकम् अवबोधस्तत्त्वज्ञानमेव वारि तद्धो युष्माकमस-कलैरसमग्रैर्नयनान्येवाञ्जलयस्तैः परिपीयमाणमिवेत्युत्-प्रेक्षा। अवसादं क्षयमेति। मुक्तानपि बध्नतीनां वः कथम-सामर्थ्यमिति भावः। अत्रोत्प्रेक्षारूपकयोः सङ्करः ॥४१॥

बहुधेति। किञ्च पुरा जगति बहुधा गतां नानामुखेन विप्रकीर्णां कमनीयतां चन्द्राद्युपमानद्रव्यगतलावण्यं सम-भिहृत्य संगृह्य भवतीर्व्विदधता भूतसृजा ब्रह्मणा जनता जनसमूहः। ग्रामजनेत्यादिना तल्। सुरसद्मयानसुमुखी स्वर्लोकयात्राप्रवणा उपपादिता कृता। सर्गस्यापि यत्-सादात् सर्व्वलोकश्लाघत्वन्तासां वः कथमसामर्थ्यमिति भावः। अत्राप्सरसां प्रकीर्णलावण्यसङ्ग्रहासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः ॥ ४२॥

अथ कार्य्यशक्तिमाह। तदिति। तत्तस्मात्समर्थत्वात् कलासु गीतवाद्यादिषु कृतिभिः कुशलैः सचिवैर्गन्धर्वैः सहिता उपेत्य तस्य पुरुषस्य तपो विघ्नयत विघ्नवत्कुरुत वि-हतेत्यर्थः। विघ्नवच्छब्दान्मत्वन्तात् तत्करोतीति णिचि लोट्

हृतवीतरागमनसान्ननु वः
सुखसङ्गिनम्प्रति सुखावजितिः ॥ ४३॥
अविलङ्घ्यमेतदभिलष्यति स
द्विषताम्वधेन विषयाभिरतिम् ।
भववीतये नहि तथा स विधिः
क्व शरासनं क्व च विमुक्तिपथः ॥ ४४ ॥

व्याविष्टवद्भावान्नतुपोलुक् । नचात्रासामर्थ्यशङ्काकार्येत्य-र्थान्तरन्यासेनाह । हृतेति । ननु सम्बोधने हे अप्सरसो हृतानि वशीकृतानि वीतरागाणान्निस्पृहाणां मुमुक्षूणां मनांसि चित्तानि याभिस्तासां वोयुष्माकमप्सरसां सुखसङ्गिनम्पुरुषम्प्रति सुखाभिलाषिणम्प्रत्यवजितिर्विजयः सुखा नतु दुःकरा खलु । तेनायं सुखार्थी न मुमुक्षुरित्युक्तम् ॥ ४३ ॥

अथ सुखसङ्गित्वलिङ्गमाह । अविलङ्घ्येति । हे अप्सरसः स पुरुषो द्विषतां शत्रुणाम्वधेन शत्रुहननद्वारा विषयाभिरतिं विषयसुखमभिलष्यति वाञ्छति । वा भाषेत्यादिना श्यन्प्रत्ययः । एतद्विषयसक्तत्वम् अविलङ्घ्यमसन्दिग्धम् । ऋदुपधाच्चाक्लृपिचृतेरिति क्यप् । हि यस्मात्स विधिः स विभर्त्ति भीषणभुजङ्गभुजेत्यादिश्लोकोक्तोऽनुष्ठानप्रकारोभववीतये संसारमुक्तये न भवति । कुत इत्याह । शरासनन्धनुः क्व विमुक्तेः पन्थाश्च क्व परस्परं विरुद्धमि-

पृथुधाम्नि तत्र परिबोधि च मा
भवतीभिरन्यमुनिवद्विकृतिः।
स्वयशांसि विक्रमवतामवतां
न वधूष्वघानि विमृषन्ति धियः॥ ४५॥
आशंसितापचितिचारु पुरः सुराणा
मादेशमित्यभिमुखं समवाप्य भर्तुः।

त्यर्थः। न खलु हिंसामापुष्या मुक्तिरिति भावः। अर्थां-
न्तरन्यासोऽलङ्कारः॥ ४४॥

नच पापभयमपि भवतीभ्यो युक्तमित्याह। पृथ्विति।
पृथुधाम्नि महातेजसि तत्र तस्मिन् पुरुषविषये अन्यमुनि-
वदन्यस्मिन्मुनाविव। तत्र तस्येवेति वतिप्रत्ययः। विकृतिः
कोपविकारश्च भवतीभिर्मा परिबोधि मा विज्ञायि मा
शङ्कीति यावत्। बुध्यतेः कर्मणि लुङ् माङ्योगादाशी-
रर्थे अडागमाभावश्च। तथाहि। स्वयशांसि अवतां रक्षतां
यशोधनानामित्यर्थः विक्रमवतां धियश्चित्तानि वधूषु स्त्री-
विषये अघानि व्यसनानि। दुःखैनोव्यसनेष्वघमिति वैज-
यन्ती। न विमृषन्ति। अर्थान्तरन्यासः। स्त्रीहिंसायाः
शूराणां यशोहानिकरत्वान्न सर्वथा वोहिनस्ति स
इत्यर्थः॥ ४५॥

आशंसितेति। अमर्त्यवधूजनोऽप्सरसाङ्गणः सुराणां
पुरोऽग्रे आशंसितापचितिभिरपेक्षितसम्भावनाभिश्चारु
यथा तथा। अपचितिरर्चायामित्यमरः। अभिमुखं

लेभे परां द्युतिममर्त्यवधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः ॥ ४६ ॥
प्रणतिमथ विधाय प्रस्थिताः सद्मनस्ताः
स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः ।
अचलनलिनलक्ष्मीहारि नालम्बभूव
स्तिमितममरभर्तुर्द्रष्टुमक्ष्णां सहस्रम् ॥ ४७ ॥

इति श्रीमहोपाध्यायभारविकृतौ किरातार्जुनीये महाकाव्ये युवतिप्रस्थाने नाम षष्ठः सर्गः ॥ ६ ॥

समचम्भर्तुः स्वामिनः इति पूर्वात् मादेशान्नियोगं सम... वाप्य परां द्युतिं लेभे । तथाहि । अधिकृतस्य क्वचिदधिकारे नियुक्तस्य सम्भावना स्वामिकृता पूजा तेजः कान्तिं तनोति ॥ ४६ ॥

प्रणतिमिति । अथ प्रणतिं विधाय सद्मनः इन्द्रभवनात्प्रस्थिताः प्रचलिताः स्तनभरैर्नमितानि अङ्गानि यासान्ताः । अङ्गगात्रकण्ठेभ्यो वक्तव्यमिति ङीष् । प्रीतिभाजः स्वामिसम्भावनतया सन्तुष्टाः ताः अङ्गनाः अचलनलिनानां स्थिरकमलानां लक्ष्मीर्हरतीति तत्तयोक्तं तद्वन्मनोहरमित्यर्थः कृतस्तिमितं विस्मयनिश्चलममरभर्तुरक्ष्णां सहस्रं कर्तृ द्रष्टुमलं समर्थन्न बभूव । तासां सौन्दर्यसारस्याहितत्वादिति भावः । लुप्तोपमालङ्कारः ॥ ४७ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां षष्ठः सर्गः ॥ ६ ॥

# सप्तमः सर्गः ।

श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानामथ सचिवैस्त्रिलोकभर्त्तुः ।
सम्मूर्च्छन्नलघुविमानरन्ध्रभिन्नः
प्रस्थानं समभिदधे मृदङ्गनादः ॥ १ ॥
सोत्कण्ठैरमरगणैरनुप्रकीर्णां
न्निर्याय ज्वलितरुचः पुरान्मघोनः ।

श्रीमद्भिरिति। अथ प्रस्थानानन्तरं श्रीमद्भिः शोभावद्भिः सह रथगजेन सरथगजास्तैः। तेन सहेति तुल्ययोग इति बहुव्रीहिः त्रयाणां लोकानां भर्तुस्त्रिलोकभर्तुरिन्द्रस्य। तद्धितार्थेत्यादिना उत्तरपदसमासः। सचिवैर्गन्धर्वैर्गुप्तानां सुराङ्गनानामप्सरसां प्रस्थानं गमनमलघुषु महत्सु विमानरन्ध्रेषु विमानानां कुक्षिषु कुहरेषु भिन्नः प्रतिध्वानैरनेकीभूतानाम् अतएव सम्मूर्च्छन् व्याप्नुवन्मृदङ्गनादः समभिदधे आचख्यौ। पौरेभ्य इति शेषः। अस्मिन् सर्गे प्रहर्षिणीवृत्तम्। म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयमिति लक्षणात् ॥ १ ॥

सोत्कण्ठैरिति। सोत्कण्ठैरुत्कण्ठोत्सुकैरित्यर्थः अमरगणैरनुप्रकीर्णांव्याप्तां ज्वलितरुचो दीप्तप्रभा मघोन-

रामाणामुपरि विवस्वतः स्थिताना
न्नासेदे चरितगुणत्वमातपत्रैः ॥ २ ॥
धूतानामभिमुखपातिभिः समीरै
रायासादविशदलोचनोत्पलानाम् ।
आनिन्ये मदजनितां श्रियम्वधूना
मुष्णांशुद्युतिजनितः कपोलरागः ॥ ३ ॥
तिष्ठद्भिः कथमपि देवतानुभावा
दाकृष्टैः प्रजविभिरायतन्तुरङ्गैः ।

न्द्रस्य पुरादमरावत्याः निर्गत्य । यातेः ण्वुल्यप् । विवस्वतः उपरिस्थितानां रामाणान् आतपान्त्रायन्त इत्यातपत्रैः । सुपीति योगविभागात्कप्रत्ययः । चरितगुणत्वं सार्थकत्वं नासेदे न प्रापे । आतपत्राणां सत्त्वादिति भावः ॥ २ ॥

धूतानामिति । अभिमुखपातिभिः समीरः प्रतिकूलवायुभिर्धूतानामिति । दुर्निमित्तसूचनम् । आयासात्कृतिप्रयासादविशदलोचनोत्पलानां वधूनां उष्णांशुद्युतिजनितः आतपकृतः कपोलानां रागः पाटलत्वं मदेन जनितां श्रियन्तत्सदृशीं श्रियमित्यर्थः । अतएव निदर्शनालङ्कारः । आनिन्ये आनीतवान् वधूरिति शेषः । आङ्पूर्वान्नयतेः कर्त्तरि लिट् अकारानुबन्धत्वादात्मनेपदम् ॥ ३ ॥

तिष्ठद्भिरिति । कथमपि वाढम् । कथमादौ तथा-

नेमीनामसति विवर्त्तने रथौघै-
रासेदे नभसि विमानवत्प्रवृत्तिः ॥ ४ ॥
कान्तानां कृतपुलकः स्तनाङ्गरागे
वक्त्रेषु च्युततिलकेषु मौक्तिकाभः ।
सम्पेदे श्रमसलिलोद्गमो विभूषा
रम्याणां विकृतिरपि श्रियन्तनोति ॥ ५ ॥
राजद्भिः पथि मरुतामभिन्नरूपै-
रुल्काभिः स्फुटगतिभिर्ध्वजांशुकानाम् ।

ध्वन्तो यत्ने गौरववाढयोरिति वैजयन्ती । देवतानामनुभावात्तिष्ठद्भिरपतद्भिरित्यर्थः । रथविशेषणमेतत् । मजविभिर्वेगवद्भिस्तुरङ्गैरायतं दूरमाकृष्टैः रथौघैर्वियत्याकाशे नेमीनाञ्चक्रधाराणाम् । चक्रधारा प्रधिर्नेमिरिति यादवः । विवर्त्तने भ्रमणेऽसति विमानवद्विमानानामिवेत्युपमा तस्येवेति वतिप्रत्ययः । प्रवृत्तिर्गतिरासेदे प्राप्ता । सदेः कर्म्मणि लिट् ॥ ४ ॥

कान्तानामिति । कान्तानां स्तनानामङ्गरागे कृतपुलकोजनितोद्भेदः कृतरोमाञ्च इत्यर्थः । च्युताः प्रमृष्टास्तिलका येषान्तेषु वक्त्रेषु मौक्तिकाभः श्रमसलिलोद्गमः स्वेदोद्भेदो विभूषा भूषणं सम्पेदे सम्पन्नः । कर्त्तरि लिट् । तथाहि रम्याणां स्वभावसुन्दराणां विकृतिरपि श्रियन्तनोति । अतः स्वेदस्यापि विभूषणत्वमुपपद्यत इति भावः ॥ ५ ॥

राजद्भिरिति । मरुताम्पथ्याकाशे राजद्भिर्दीप्यमाना-

तेजोभिः कनकनिकाषराजिगौरै-
रायामः क्रियत इव स्म सातिरेकः ॥ ६ ॥
रामाणामवजितमाल्यसौकुमार्ये
सम्प्राप्ते वपुषि सहत्वमातपस्य ।
गन्धर्वैरधिगतविस्मयैः प्रतीये
कल्याणी विधिषु विचित्रता विधातुः ॥ ७ ॥

तैरभिन्नरूपैरविच्छिन्नाकारैः अतएवोल्कानामर्चींषीव स्फुटगतीनि दीप्तमार्गाणि तैः कनकस्य निकाषः निकषकषणन्तस्य राजीरेखा तद्वद्गौरैररुणैः । गौरः पीतेऽरुणे-श्वेते इति विश्वः । ध्वजांशुकानान्तेजोभिः पताकाकान्तिभिरायामस्तेषामेव दैर्घ्यं सातिरेकः सातिशयः क्रियते-स्मेव कृत इव दीर्घध्वजपटाः स्वतेजः प्रसारेण दीर्घतमा-इव लक्ष्यन्त इत्युत्प्रेक्षा साचोल्काद्युपमानुप्राणिता ॥ ६ ॥

रामाणामिति । मालैव माल्यन्तस्य सौकुमार्य्यमवजितं येन तस्मिन् कुसुमादपि मनोहर इत्यर्थः । रामाणां वपुषि आतपस्य । कृद्योगे कर्म्मणि षष्ठी । सहत इति सहः क्षमः । पचाद्यच् । तस्य भावः सहत्वम् । तत्सम्प्राप्ते सति अधिगतविस्मयैः सम्प्राप्ताश्चर्यैर्गन्धर्वैः विधातुर्व्विधिषु सृष्टिषु कल्याणी साध्वी श्रेयसी उपकारकत्वादिति भावः विचित्रता नानाविधत्वम्प्रतीये अवगता ज्ञाता । प्रतिपूर्वादिणः कर्म्मणि लिट् ॥ ७ ॥

सिन्दूरैः कृतरुचयः सहेमकक्ष्याः
स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः।
साद्दृश्यं ययुररुणांशुरागभिन्नै
र्वर्षद्भिः स्फुरितशतह्रदैः पयोदैः ॥ ८॥

अत्यर्थं दुरुपसदादुपेत्य दूरं
पर्य्यन्तादहिममयूखमण्डलस्य।
आशानामुपरि चितामिवैकवेणीं
रम्योर्म्मिंत्रिदशनदीं ययुर्बलानि ॥ ९॥

सिन्दूरैरिति। सिन्दूरैर्नागसम्भवसंज्ञैरागद्रव्यैः। सिन्दूरं नागसम्भवमित्यमरः। कृतरुचयोऽलङ्कृता इत्यर्थः। सह हेम्नः कक्ष्याभिर्मध्यबन्धनैः सहेमकक्ष्याः। तेन सहेति तुल्ययोग इति बहुब्रीहिः। कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने इत्यमरः। स्रोतोभिः सप्तभिर्मदनाडीभिः। कराल्कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदच्युतिरिति पालकाव्ये। करान्नासारन्ध्राभ्यामित्यर्थः। मदं क्षरन्तो वर्षन्तस्त्रिदशगजाः अरुणस्यार्कस्यांशूनां रागेणारुण्येन भिन्नैः संसृष्टैर्वर्षद्भिः स्फुरितशतह्रदैः स्फुरिततडिद्भिः पयोदैः साद्दृश्यं ययुरित्युपमालङ्कारः ॥८॥

अत्यर्थमिति। बलानि सैन्यानि अत्यर्थं दुरुपसदात् दुःसहादहिममयूखमण्डलस्य सूर्यबिम्बस्य पर्यन्तात् समीपात् दूरमुपेत्यागत्य आशानामुपरि चितां गुम्फितामेकवेणीमिव स्थितामित्युत्प्रेक्षा। रम्या ऊर्म्मयस्तरङ्गाः यस्यास्तां त्रिदशनदीं मन्दाकिनीं ययुः प्रापुः ॥९॥

आमत्तभ्रमरकुलाकुलानि धुन्व
न्नुद्भूतग्रथितरजांसि पङ्कजानि।
कान्तानाङ्गगननदीतरङ्गशीतः
सन्तापं विरमयति स्म मातरिश्वा ॥१०॥
सम्भिन्नैरिभतुरगावगाहनेन
प्राप्योर्व्वीरनु पदवीं विमानपङ्क्तीः।

आमत्तेति। आमत्तैर्भ्रमरकुलैराकुलानि उद्भूतानि उत्थापितानि ग्रथितानि अन्योन्यसम्बद्धानि च रजांसि येषु तानि पङ्कजानि धुन्वन् कम्पयन् सुरभिरित्यर्थः गगननदीतरङ्गैः शीतोमातरिश्वः वायुः कान्तानां सन्तापं विरमयति स्म शमयामास मातर्य्यन्तरिक्षे श्वयतीति निरुक्तिः॥ १०॥

सम्भिन्नैरिति। इभतुरगावगाहनेन हस्त्यश्वाबलोडनेन सम्भिन्नैः संक्षुभितैः सुरापगायाः पयोभिः कर्तृभिः पदवीमनुपदव्यामित्यर्थः। लक्षणेत्यम्भूतेत्यादिना कर्म्मप्रवचनीयत्वाद्द्वितीया। उर्व्वीर्व्विपुलाविमानपङ्क्तीः प्राप्य तदेव पूर्व्वन्ततूर्व्वमिदमप्रथमं यया तया आकाशगङ्गायास्तटाभावादिति भावः वप्रान्तेषु रोधोभूमिषु स्खलितानि तैर्व्विवर्त्तनं प्रत्याहत्तिः वप्रान्त स्खलितविवर्त्तनन्तटान्तस्खलनप्रतिवर्त्तनम्। वप्रः पितरि केदारे वप्रः

तस्थूर्बं प्रतिविदधे सुरापगाया
वप्रान्तस्खलितविवर्त्तनम्पयोभिः ॥ ११ ॥
क्रान्तानां ग्रहचरितात्पथोरथाना
मक्षाग्रक्षतसुरवेश्मवेदिकानाम्।
निःसङ्गम्प्रधिभिरुपाददे विवृत्तिः
सम्पीडक्षुभितजलेषु तोयदेषु ॥ १२ ॥
तप्तानामुपदधिरे विषाणभिन्नाः
प्रह्लादं सुरकरिणाङ्घनाः क्षरन्तः।

प्राकाररोधसोरिति वैजयन्ती। प्रतिविदधे चक्रे इत्यतिशयोक्तिः ॥ ११ ॥

क्रान्तानामिति। ग्रहैः सूर्यादिभिश्चरितादाश्रितात् कर्मणि क्तः। पथोमार्गात्। क्रान्तानां निष्क्रान्तानाम् अक्षाश्चक्रधरादारुविशेषास्तेषामग्रैः क्षतादारिताः सुरवेश्मवेदिकायैस्तेषां रथानाम्प्रधिभिर्नेमिभिश्चक्रान्तैः। चक्रं रथाङ्गन्तस्यान्तेनेमिः स्त्रीस्यात्प्रधिः पुमानित्यमरः। सम्पीडेन मर्द्दनेन क्षुभितानि जलानि येषान्तेषु तोयदेषु निःसङ्गमप्रतिघातं यथा तथा विवृत्तिः परिभ्रमणमुपाददे स्वीकृतेत्यतिशयोक्तिः स्वभावोक्त्या संसृज्यते ॥ १२ ॥

तप्तानामिति। विषाणभिन्नागजदन्तक्षताः विषाणं दन्तशृङ्गयोरिति हलायुधः। अतएव क्षरन्तः स्रवन्तो घनास्तप्तानां सुरकारिणाम्प्रह्लादमुपदधिरे उपचक्रिरे

युक्तानाङ्खलु महतास्परोपकारे
कल्याणी भवति रुजत्स्वपि प्रवृत्तिः॥ १३
संवाता मुहुरनिलेन नीयमाने
दिव्यस्त्रीजघनवरांशुके विवृत्तिम् ।
पर्य्यस्यत्पृथुमणिमेखलांशुजालं
सञ्जज्ञे युतकमिवान्तरीयमूर्वोः॥ १४॥

तथाहि । परोपकारे युक्तानामासक्तानां रुजत्स्वपि पीडयत्स्वपि विषये कल्याणी हितकारिणी खलुप्रवृत्तिर्व्यापारोभवतीत्यर्थान्तरन्यासोऽलङ्कारः । ततोयुक्तं सेवानाङ्गजदन्तक्षतानामपि तदाह्लादकत्वमिति भावः॥ १३॥

संवातेति । संवाता संवहता । वातेर्गत्यर्थाच्छतृप्रत्ययः । अनिलेन कामिनेवेति भावः । दिव्यस्त्रीणाञ्जघनेषु वरं श्रेष्ठं यदंशुकन्तस्मिन् विवृत्तिमपसारं मुहुर्नीयमाने सति पर्य्यस्यत्प्रसरत्पृथु विशालं मणिमेखलांशुजालमूर्वोर्युतकं चलनाख्यमिव । युतकं संशये युग्मे यौतके चलेऽपि चेति विश्वः । अन्तरे भवं अन्तरीयमधोंऽशुकम् । गहादिभ्यश्चेति छप्रत्ययः । अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुकइत्यमरः । संजज्ञे सञ्जातम् । जनिधातोः कर्त्तरि लिट् । उत्प्रेक्षालङ्कारः॥ १४॥

प्रतीति । तुषारपातैः शीकरवर्षैः । तुषारौ हिमशीकराविति विश्वः । प्रत्यार्द्रीकृततिलकामार्ज्जितविशेष-

अत्यार्द्रीकृततिलकास्तुषारपातैः
प्रह्लादं शमितपरिश्रमादिशन्तः।
कान्तानां बहुमतिमाययुः पयोदा
नाल्पीयान् बहु सुकृतं हिनस्ति दोषः २५

यातस्य ग्रथिततरङ्गसैकताभे
विच्छेदं विपयसि वारिवाहजाले।
आतेनुस्त्रिदशवधूजनाङ्गभाजां
सन्धानं सुरधनुषः प्रभामणीनाम् ॥ १६॥

का अपि शमितपरिश्रमाः प्रह्लादमानन्दन्दिशन्तः पयोदाः कान्तानाम्। कर्त्तरि षष्ठी। बहुमतिं सम्मानमाययुः। तथाहि। अल्पीयानल्पोदोषो बहुप्रभूतं सुकृतमुपकारं न हिनस्ति न हन्ति। अर्थान्तरन्यासोऽलङ्कारः ॥१५॥

यातस्येति। ग्रथिततरङ्गं बद्धोर्मि यत्सैकतन्तस्या भेवाभा यस्य तस्मिन्विगतानि पयांसि यस्मात्तस्मिन्निर्जल शेषाद्विभाषेत्यस्य पाक्षिकत्वान्न समासान्तः। उरःप्रभृति पाठस्तु पयःशब्दस्यैकवचनान्तस्यैवेति न कश्चिद्विरोधः। वारिवाहजाले मेघवृन्दे विच्छेदन्त्रुटिं यातस्य सुरधनुष इन्द्रचापस्य त्रिदशवधूजनाङ्गभाजां मणीनान्तदङ्गसङ्गि विभूषामणीनामित्यर्थः। प्रभाः कान्तयः सन्धानमातेनुश्चक्रुः। अत्राभरणप्रभाणामिन्द्रधनुषोऽसम्बन्धेपि सम्बन्धाभिधानादतिशयोक्तिरलङ्कारः ॥ १६ ॥

संसिद्धाविति करणीयसन्निबद्धै
रालापैः पिपतिषतां विलङ्घ्य वीथीम् ।
आसेदे दशशतलोचनध्वजिन्या
जीमूतैरपिहितसानुरिन्द्रकीलः ॥१७॥
आकीर्णा मुखनलिनैर्विलासिनीना
मुद्धूतस्फुटविशदातपत्रफेना ।

संसिद्धाविति । संसिद्धौ कार्य्यसिद्धिविषये इतीत्थं भाविनाप्रकारेण कर्त्तव्यमिति करणीयन्तेन सन्निबद्धैः संयोजितैरित्यर्थः आलापैरामाषणैरुपलक्षितया । स्या-द्राभाषणमालापइत्यमरः । दशशतानि सङ्ख्यायेषु तानि लोचनानि यस्य सः सहस्रलोचनइत्यर्थः तस्य ध्वजिन्या सेनया पिपतिषयाम्पतिषणां वीथीं मार्गम् । पिलन्तो-नभसङ्गमाइत्यमरः। तनिपतीत्यादिना विकल्पादिडागमः। विलङ्घ्य जीमूतैः जीवस्योदकस्य मूतः पटबन्धोयेषान्ते तैः । पृषोदरादित्वात्साधुः । अपिहितसानुराच्छादित-तटउन्नत इत्यर्थः । इन्द्रकील आसेदे प्राप्तः । सीदतेः कर्म्मणि लिट् ॥ १७ ॥

आकीर्णेति । विलासिनीनां मुखनलिनैः । उपमित-समासः । आकीर्णाव्याप्ता उद्धूतान्यूर्द्ध्वमुत्क्षिप्तानि स्फुटा-न्यसङ्कुचितानि विशदातपत्राणि श्वेतच्छत्राणि फेनाइव यस्यास्तथोक्ता तूर्य्यध्वनितैर्वाद्यघोषैर्गभीरं यथा तथा

सा तूर्य्यध्वनितगभीरमापतन्ती
भूभर्त्तुः शिरसि नभोनदीव रेजे ॥ १८॥
सेतुत्वन्दधति पयोमुचां विताने
संरम्भादभिपततोरथान् जवेन ।
आनिन्युर्नियमितरश्मिभुग्नघोणाः
कृच्छ्रेण क्षितिमवनामिनस्तु रङ्गाः ॥ १९॥
माहेन्द्रन्नगमभितः करेणुवर्य्याः
पर्य्यन्तस्थितजलदादिवः पतन्तः ।

भूभर्तुरिन्द्रकीलस्य शिरसि आपतन्ती सा सेना नभोनदीव रेजे ॥ १८ ॥

सेतुत्वमिति । पयोमुचां विताने सेतुत्वन्दधति सति संरम्भादाटोपाज्जवेनाभिपततोसेघट्टन्दमधरीकृत्य धावत इत्यर्थः । रथान्नियमितैराकृष्टैरश्मिभिः प्रग्रहैर्भुग्ना आकुञ्चिताः घोणाः प्रोथायेषान्ते । कुञ्चितन्नतं विद्धं कुटिलम्भुग्नं वेल्लितं वक्रमित्यमरः । किरणप्रग्रहौ रश्मी इत्यमरः घोणा तु प्रोथमस्त्रियामित्यमरः अवनमन्तीत्यवनामिनोऽवनतपूर्व्वकायास्तु रङ्गाः कृच्छ्रेण महता प्रयत्नेन क्षितिमानिन्युः इति स्वभावोक्तिः ॥ १९ ॥

माहेन्द्रमिति । माहेन्द्रं नगमभितः इन्द्रकीलाभिमुखम् । अभितः परितइत्यादिना द्वितीया । दिवोऽन्तरिक्षात्पतन्तोऽवतरन्तः पर्यन्तस्थिताः पार्श्वस्थाजलदा ये-

सादृश्यं निलयननिष्प्रकम्पपक्षै-
राजग्मुर्जलनिधिशायिभिर्नगेन्द्रैः ॥२०॥

उत्सङ्गे समविषमे समं महाद्रेः
क्रान्तानां वियदभिपातलाघवेन ।
आमूलादुपनदि सैकतेषु लेभे
सामग्र्यं खुरपदवी तुरङ्गमाणाम् ॥२१॥

षान्ते करेणुवर्याः वर्याः श्रेष्ठा इत्यर्थः । न निर्धारण इति षष्ठीसमासनिषेधात् सप्तमीति योगविभागात् सप्तमीसमासः । निलयने स्थाने निष्प्रकम्पपक्षैर्निश्चलपक्षैर्जलनिधिशायिभिर्नगेन्द्रैर्मैनाकादिभिः सादृश्यमाजग्मुरित्युपमा ॥ २० ॥

उत्सङ्ग इति । महाद्रेरुत्सङ्गे मूर्ध्नि विषये समविषमं समञ्च विषमञ्च निम्नोन्नतन्तस्मिन् । द्वन्द्वैकवद्भावः । वियदभिपातलाघवेन गगनसञ्चारपाटवेन समवैकरूपमारोहावरोहरहितमित्यर्थः क्रान्तागाङ्क्रतान्तुरङ्गमाणां खुरपदवी खुरपङ्क्तिः उपनदि नदीसमीपे । अव्ययीभावश्चेति नपुंसकत्वात् ह्रस्वत्वम् । सैकतेषु आमूलान्मूलमारभ्य आदित आरभ्येति यावत् समग्रस्य भावः [illegible]लेभे । सैकतादन्यत्र निम्नेषु गगनचारेण समप्रदेशेष्वपि खुरस्पर्शाभावाद्विच्छिन्ना खुरसरणिः सैकतेषु तु सर्वत्र समत्वादविच्छिन्नेत्यर्थः ॥ २१ ॥

सध्वानन्निपतितनिर्झरासु मन्द्रैः
सम्मूर्च्छन् प्रतिनिनदैरधित्यकासु ।
उद्ग्रीवैर्घनरवशङ्कया मयूरैः
सोत्कण्ठं ध्वनिरुपशुश्रुवे रथानाम्॥ २२॥
सम्भिन्नामविरलपातिभिर्मयूखै
र्नीलानामृभृशमुपमेखलं मणीनाम् ।

सध्वानमिति । सध्वानं सशब्दं निपतिताः निर्झराः प्रवाहायासु तासु। प्रवाहोनिर्झरोझरइत्यमरः । अधित्यकासु नगोर्द्ध्वभूमिषु। भूमिरूर्द्ध्वमधित्यकेत्यमरः । उपाधिभ्यामित्यादिना त्यकन्प्रत्ययः। मन्द्रैर्गम्भीरैः । कलोमन्द्रस्तु गम्भीरइत्यमरः । प्रतिनिनदैः प्रतिध्वानैः सम्मूर्छन् वर्द्धमानः रथानां ध्वनिर्घनरवशङ्कया मेघगर्जितभ्रमेणेति भ्रान्तिमदलङ्कारः । उद्ग्रीवैर्मयूरैः सोत्कण्ठमुपशुश्रुवे उपश्रुतः । शृणोतेः कर्म्मणि लिट् ॥ २२ ॥

सम्भिन्नामिति । अविरलपातिभिर्निरन्तरप्रसारिभिरुपमेखले मेखलातटेष्वित्यर्थः । अथ मेखला श्रोणिस्थानेऽद्रिकटके कटिबन्धेऽसिबन्धनइति यादवः । नीलानां मणीनां मयूखैर्भृशं सम्भिन्नामेकीभूतामतएव नभोऽन्तराले विच्छिन्नामिव स्थितामित्युत्प्रेक्षा । वप्राम्भस्तुतिं वप्रोदकधारां वनिता अवलोकताम्बभूवुः वप्राम्भःस्नुतेः स्वधवलिमत्यागेनेन्द्रनीलानां नीलिमस्वीकाररूपतद्गुणोल्यापिपा

विच्छिन्नामिव वनितानभोऽन्तराले
वप्राम्भःस्रुतिमवलोकयांबभूवुः ॥ २३ ॥
आसन्नद्विपपदवीमदानिलाय
क्रुध्यन्तोऽधियमवमत्य धूर्गतानाम्।
सव्याजं निजकरिणीभिरात्तचित्ताः
प्रस्थानं सुरकरिणः कथञ्चिदीषुः ॥ २४
नीरन्ध्रं पथिषु रजोरथाङ्गनुन्न-
म्पर्य्यस्यन्नवसलिलारुणं वहन्ती।

विच्छेदोत्प्रेक्षेति तयोरङ्गाङ्गभावेन सङ्करः। तेन च
नल्याविच्छेदभ्रमरूपोभ्रान्तिमान् व्यज्यते ॥ २३ ॥

आसन्नेति। धुरङ्गतास्तेषान्धूर्गतानान्नियन्तॄणां
धियमवमत्यागणयित्वा अवज्ञायेति यावत् आसन्नायां द्वि-
पपदव्यां वनगजमार्गे योमदानिलस्तस्मै क्रुध्यन्तः तम्प्र-
ति कुप्यन्तः। क्रुधद्रुहेत्यादिना सम्प्रदानत्वाच्चतुर्थी।
सव्याजं सकपटं निजकरिणीभिरात्तचित्ताआकृष्टचित्ताः
सुरकरिणोदेवनागाः प्रस्थानङ्गमनङ्कथञ्चित्कष्टेन ईषुर-
भिलेषुः ॥ २४ ॥

नीरन्ध्रमिति। नीन्ध्रं सान्द्रम्पथिषु रथाङ्गैश्चक्रैर्नुन्न
प्रेरितम्। नुन्ननन्नास्यनिष्ठूतविद्वच्छिन्नेरिताः समाइत्य-
मरः। पर्य्यस्यत्प्रसरन्नवसलिलमिवारुणं रजोवहन्तीषा

आतेने वनगहनानि वाहिनी सा
घर्म्मान्त्तक्षुभितजलेव जह्नुकन्या ॥ २५ ॥
सम्भोगक्षमगहना मथोपगङ्गं
बिभ्राणां ज्वलितमणीनि सैकतानि ।
अध्यूषुश्च्युतकुसुमाचितां सहाया
वृत्रारेरविरलशाद्वलां धरित्रीम् ॥ २६ ॥

वाहिनी सेना घर्म्मान्ते प्रावृषि क्षुभितजला कलुषोदके-त्यर्थः जह्नुकन्या गङ्गेव वनानि फलकुसुमप्रधानानि गह-नानि जीर्णानि च तानि च तानि वनगहनानि आतेने व्यानशे । अत्र समासगतवाक्यगतीसमयोः सजातीययो-रङ्गाङ्गिभावेन सङ्करः ॥ २५ ॥

सम्भोगेति । अथ वृत्रारेः शक्रस्य सहायाः सचिवाः गन्धर्व्वा उपगङ्गं गङ्गासमीपे । अव्ययीभावस्य नपुंसकत्वात् क्लीवत्वम् । सम्भोगक्षमगहनाम् उपभोगयोग्यवनां ज्वलिताः मणयो येषु तानि सैकतानि बिभ्राणाम् । भृञः कर्त्तरि लटः शानच् । च्युतैः स्वयम्पतितैः कुसुमैराचितां व्या-प्ताम् अविरलाः सान्द्राः शाद्वलाः शादप्रायप्रदेशा यस्यां सा ताम्धरित्रीमध्यूषुरधितस्थुः । वसतेर्यजादित्वात्सम्प्र-सारणम् । अत धरित्रीविशेषणार्थानामधिवासहेतुत्वा-दनेकपार्थहेतुकञ्चाव्यलिङ्गमलङ्कारः ॥ २६ ॥

भर्तुरिति । तदा हरिसखवाहिनीनिवेशोगन्धर्व्व-

भूभर्तुः समधिकमादधे तदोर्व्याः
श्रीमत्तां हरिसखवाहिनीनिवेशः।
संसक्तौ किमसुलभं महोदयानां
मुच्छ्रायं नयति यदृच्छयापि योगः ॥२७॥
सामोदाः कुसुमतरुश्रियो विविक्ताः
सम्पत्तिः किशलयशालिनी लतानाम्।

सेनाशिविरम्। निवेशः शिविरोद्वाहविन्यासेषु प्रकीर्त्तित- इति शाश्वतः। भूभर्तुः पर्वतस्य उर्व्याः भूमिकाः पूर्वस्मादभ्य- धिकं यथा तथा श्रीमत्तां श्रियमित्यर्थः आदधे जनयामास। तथाहि। महोदयानां महात्मनां संसक्तौ सम्यक्सम्बन्धे सम्भक्ताविति पाठे तु सम्यक् सेवायाङ्किमसुलभन्न किञ्चि- दुर्लभमित्यर्थः। यतोयदृच्छया दैवाद्योगोऽप्युच्छ्रायमुत्क- र्षन्नयति। अत्र प्रकृतयदृच्छयायोगस्योत्कर्षाभिधानाद- प्राकृतभक्तियोगस्योत्कर्षाभिधायकत्वे कैमुतिकन्यायेनार्थाप- त्तिरिति प्राकरणिकादप्राकरणिकरूपार्थापत्तिरलङ्कारः। तदुक्तम्। एकस्य वस्तुनोभावाद्यत्र वस्त्वन्यथा पतेत्। कैमुत्येन यतः साऽस्यादर्थापत्तिरलङ्क्रियेति ॥ २७ ॥

सामोदा इति। सामोदाः ससौरभाः कुसुमप्रधाना- स्तरवः। शाकपार्थिवादिषु द्रष्टव्यः। तेषां श्रियः सम्पदः विविक्ताः विजनप्रदेशाः। विविक्तविजनच्छन्ननिःशलाका- स्तथा रहइत्यमरः। किशलयशालिनी लतानां नवपल्लव-

साफल्यं ययुरमराङ्गनोपभुक्ताः
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ २८
क्लान्तोऽपि त्रिदशवधूजनः पुरस्ता
ल्लीनाहिश्वसितविलोलपल्लवानाम् ।
सेव्यानां हतविनयैरिवाहृतानां
सम्पर्कम्परिहरति स्म चन्दनानाम् २९
उत्सृष्टध्वजकुथकङ्कटा धरित्री
मानीताविदितनयैः श्रमं विनेतुम् ।

युतवल्लीनां सम्पत्तिः । एता अमराङ्गनोपभुक्ताः सत्यः साफल्यं ययुः । तथाहि यया लक्ष्मीकरणेन परेषामुपकुरुते लक्ष्मीवानिति शेषः सा लक्ष्मीर्नान्येति भावः। परेषामित्यत्रानुकरोति भगवतोनारायणस्येत्यादिवत् क्रिया योगे हि सम्बन्धसामान्ये षष्ठी ॥ २८ ॥

क्लान्तइति । क्लान्तोऽपि त्रिदशवधूजनाः पुरस्तादग्रे लीनानां संश्रितानाम् अहीनां श्वसितैर्निश्वासैर्विलोलाः पल्लवाः येषां तेषां चन्दनानां सम्पर्कं हतविनयैर्दुर्जनैः खलैः आहृतानां संवृतानां सेव्यानां प्रभूणां सम्पर्कमिव परिहरति स्म । दुष्टसंसृष्टागुणाढ्या अपि त्याज्याइति भावः ॥ २९ ॥

उत्सृष्टेति । उत्सृष्टाः आक्षिप्ताः ध्वजाः कुथा आस-

आचित्तद्रुमगहनायुगान्तवातैः
पर्य्यस्तागिरयइव द्विपाविरेजुः ॥ ३०

प्रस्थानश्रमजनितां विहाय निद्रा
मामुक्ते गजपतिना सदानपङ्के ।
शय्यान्ते कुलमलिनां चणं विलीनं
संरम्भच्युतमिव शृङ्खलञ्चकाशे ॥ ३१ ॥

रणानि कङ्कटाः तनुत्राणानि च येभ्यस्ते। प्रवेरणास्तरणं वर्णः परिस्तोमः कुथोद्वयोरित्यमरः। विदितनयैः शिचाभिज्ञैर्यन्तृभिः श्रमं विनेतुं क्लममपनेतुञ्चरितीमानीतानिवेश्यमानाद्रत्यर्थः द्विपायुगान्तवातैराचिप्तानि उद्धृतानि द्रुमाणां गहनानि वनानि येभ्यस्ते पर्य्यस्ताविपर्य्यासितागिरयइव विरेजुः शुशुभिरे ॥ ३० ॥

प्रस्थानेति । गजपतिना प्रस्थानश्रमेण गमनक्लेशेन जनितां निद्रां विहाय आमुक्ते अतएव सदानपङ्के गजमदयुक्ते शय्यान्ते शयनीयप्रदेशे चणं विलीनं लग्नम् अलिनां कुलं संरम्भ णोत्थान सम्भ्रमेण च्युतं भ्रष्टं शृङ्खलं निगडमिवेत्युत्प्रेचा । अथ शृङ्खले अन्दुकोनिगडोऽस्त्री स्यादित्यमरः। चकाशे शुशुभे ॥ ३१ ॥

आयस्तः सुरसरिदोघरुद्धवर्त्मा
सम्प्राप्तुं वनगजदानगन्धि रोधः ।
मूर्द्धानं निहितशिताङ्कुशं विधुन्वन्
यन्तारन्न विगणयाञ्चकार नागः ॥ ३२ ॥
आरोढुः समवनतस्य पीतशेषे
साशङ्कं पयसि समीरिते करेण ।

आयस्त इति । वनगजदानस्य गन्धोऽस्यास्तीति तथोक्तं रोधः परकूलमित्यर्थः सम्प्राप्तुं जन्तुम् आयस्तः उत्सुकः प्रयत्नं कुर्व्वाण इत्यर्थः । यसु प्रयत्ने इति धातोः कर्त्तरि क्तः । किन्तु सुरसरिदोघेन गङ्गाप्रवाहेन रुद्धं वर्त्म यस्य सः । नागो गजो निहितोदत्तः शितस्तीक्ष्णोऽङ्कुशो यस्मिन् । अङ्कुशोऽस्त्री सृणिः स्त्रीयामित्यमरः । तं मूर्द्धानं विधुन्वन् रोषादिति भावः यन्तारन्न विगणयाञ्चकार न विगणयामास ॥ ३२ ॥

आरोढुरिति । समवनतस्य जलपानार्थमानपूर्व्वका यस्य करेणोर्गजस्य । करेणुरिभ्यां स्त्री नेभे इत्यमरः । करेण पीतस्य शेषे पयसि आरोढुर्हस्तिपकात्सा।शङ्कं सभयं समीरिते क्षिप्ते सति इत्यर्थः । शीकरो ऽम्बुकणः अरुणे मदस्रुती मदधारे ययोस्तौ कपोलौ संमार्ज्जन् प्रकटजन् ।

सम्मार्ज्जनन्नरुणमदस्रुती कपोलौ
सस्यन्दे मदद्रवशीकरः करेणोः ॥ ३३ ॥
आघ्राय क्षणमतितृष्यतापि रोषा
दुत्तीरन्निहितविवृत्तलोचनेन ।
सम्पृक्तं वनकरिणां मदाम्बुसेकै
र्नाचेमे हिममपि वारि वारणेन ॥ ३४ ॥
प्रश्च्योतन्मदसुरभीणि निम्नगायाः
क्रीड़न्तोगजपतयः पयांसि कृत्वा ।

वृजेरजादौ सङ्क्रमे विभाषावृद्धिर्वक्तव्येति वृद्धिः । मदद्रव सस्यन्दे स्रवन्मदसंश्लेषस्य मदसादृश्यान्मदोपमा ॥ ३३ ॥

आघ्रायेति । अतितृष्यतापि अतिपिपासतापि क्षणमाघ्राय रोषादुत्तीरं परतीरे । विभक्त्यर्थेऽव्ययीभावः । निहिते विवृत्ते घूर्णिते लोचने यस्य तेन प्रतिगजदिदृक्षयेति भावः वारणेन हिमं शीतलमपि वनकरिणां मदाम्बुसेकैर्दानधाराभिः सम्पृक्तं वारि नाचेमे न पीतम् । चम अदने इति धातोः कर्म्मणि लिट् ॥ ३४ ॥

प्रश्च्योतदिति । क्रीडन्तोविहरन्तोगजपतयः निम्नगायाः गङ्गायाः पयांसि प्रश्च्योतद्भिः क्षरद्भिर्मदैः सुर-

किञ्जल्कव्यवहितताम्रदानलेखै
रुत्तेरुः सरसिजगन्धिभिः कपोलैः ३५
आकीर्णं बलरजसा घनारुणेन
प्रक्षोभैः सपदि तरङ्गितन्तटेषु ।
मातङ्गोन्मथितसरोजरेणुपिङ्ग
म्माञ्जिष्ठं वसनमिवाम्बु निर्बभासे ॥ ३६ ॥

भीणि कृत्वा किञ्जल्कैः केसरैर्व्यवहितास्तिरोहितास्ता-
म्रास्ताम्रवर्णा दानलेखा मदराजयो येषु तैरतएव सरसि-
जगन्धिभिः कपोलैरुपलक्षिताः सन्तः उत्तेरुर्निर्जग्मुः ।
अत्र मदसरसिजगन्धयोः समयोर्विनिमयोक्त्या समपरि-
वृत्तिरलङ्कारः । तेन गजानां निम्नगायाश्च परिमलव्यत्य-
यान्तर संरम्भोव्यज्यते ॥ ३५ ॥

आकीर्णमिति । घनारुणेन सान्द्रलोहितेन । विशे-
षणसमासः । बलरजसा सेनापरागेणाकीर्णं सपदि प्रक्षो-
भैरालोडनैस्तटेषु तीरेषु तरङ्गितं सञ्जाततरङ्गम् । तार-
कादित्वादितच् । यद्वा तरङ्गवत्कृतं मत्वन्तात्तत्करोतीति
णिचि कर्मणि क्तः णाविष्टवद्भावान्मतुपोलुक् । तथा मा-
तङ्गैरुन्मथितानां लुलितानां सरोजानां रेणुभिः पिशङ्ग-
मम्बु माञ्जिष्ठेन महारञ्जनेनारक्तं माञ्जिष्ठं वसनमिव
निर्बभासे । तेन रक्तमित्यर्थः । माञ्जिष्ठमित्यत्र कौशेयमिति

श्रीमद्भिर्नियमितकन्धरापरान्तैः
संसक्तैरगुरुवनेषु साङ्गहारम् ।
सम्प्रापे निसृतमदाम्बुभिर्गजेन्द्रैः
प्रस्यन्दिप्रचलितगण्डशैलशोभा ॥ ३७ ॥

निःशेषप्रशमितरेणु वारणानां
स्रोतोभिर्मदजलमुज्झतामजस्रम् ।

वा पाठः । तत्र कौशशब्दात् ठक् । कौशेयं कृमिकोशो-
त्थमित्यमरः ॥ ३६ ॥

श्रीमद्भिरिति । श्रीमद्भिः शोभावद्भिः नियमिताः
कन्धराः अपरान्ताश्चरमपादाग्राणि च येषान्तैः । अपरः
पश्चिमः पाद इति वैजयन्ती । अगुरुवनेषु साङ्गहारं सा-
ङ्गविक्षेपं यथा तथा संसक्तैः निःसृतानि प्रसृतानि मदा-
म्बूनि येषां तैः गजेन्द्रैः प्रस्यन्दिनोजलस्राविणः प्रचलि-
ताये गण्डशैलास्थूलतोपलास्तेषां शोभासम्प्रापे प्राप्ता ।
कर्म्मणि लिट् । गण्डशैलास्तु च्युताः स्थूलोपलागिरेरित्य-
मरः अत्रान्यस्यान्यशोभाप्राप्त्यसम्भवात्तत्सदृशी शोभेति
प्रतिबिम्बत्वाक्षेपान्निदर्शनालङ्कारः ॥ ३७ ॥

निःशेषमिति । गन्धं वहतीति गन्धवाहोवायुः । कर्म्म-
स्यण् । निःशेषं यथा तथा प्रशमितोरेणुर्य्येण तत् मदजलं
स्रोतोभिर्मदनाड़ीभिः अजस्रमुज्झतां वर्षतां वारणानां

आमोदं व्यवहितभूरिपुष्पगन्धो
भिन्नैलासुरभिमुवाह गन्धवाहः ॥ ३८ ॥

साहृश्यन्दधति गभीरमेघघोषै
रुन्निद्रक्षुभितमृगाधिपश्रुतानि ।
आतेनुश्चकितचकोरनीलकण्ठा
न्कच्छान्तानमरमहेभबृंहितानि ॥ ३९

सम्बन्धिनं व्यवहितस्तिरस्कृतोभूरिर्बहुलः पुष्पगन्धो येन स भिन्नाः फुल्लाएलालताविशेषाः । पृथ्वीका चन्द्रबालैलेत्यमरः । तत्पुष्पाणि चैलाः । पुष्पे जातीप्रभृतयः स्वलिङ्गाव्रीहयः फले इत्यमरः । भिन्नैलावत्सुरभिं सुगन्धिं घ्राणेन्द्रियतर्पणमित्युपमा । आमोदम्परिमलमुवाह वहतिस्म ॥ ३८ ॥

साहृश्यमिति । गभीरैर्मेघघोषैः सान्द्रगर्जितैः साहृश्यन्दधतीत्युपमा । दधातेः शतृप्रत्ययः वा नपुंसकस्येति नुमभावः । उन्निद्राः बृंहितश्रवणादेव प्रबुद्धाः क्षुभिताः संरब्धाश्च ये मृगाधिपास्तैः श्रुतानि आकर्णितानि न तु प्रबुद्धानीति भावः । अमरमहेभबृंहितानि महान्तश्चासौ इभागजाश्चेति महेभाः अमराणां महेभाः तेषां बृंहितानि गर्जितानि कच्छान्तान् अनूपप्रदेशान् । जलप्राय-

शाखावसक्तकमनीयपरिच्छदाना
मध्वश्रमातुरवधूजनसेवितानाम्।
जज्ञे निवेशनविभागपरिष्कृतानां
लक्ष्मीः पुरोपवनजा वनपादपानाम्॥४०॥

स्वरूपं स्यात्पुंसि कच्छस्तथाविधे इत्यमरः। चकिता गर्जित शङ्कया सम्भ्रान्ताश्चकोराः पक्षिविशेषा नीलकण्ठा मयूराश्च येषु तांस्तथाभूतान् आतेनुः। भ्रान्तिमदलङ्कारः॥३९॥

शाखेति। परिच्छाद्यतेऽनेनेति परिच्छदः परिकरो वसनाभरणादिः। पुंसि संज्ञायां घः प्रायेणेति घप्रत्ययः छादेर्घे ऽद्युपसर्गस्येति ह्रस्वत्वम्। शाखास्ववसक्ताः कमनीयाः परिच्छदा येषान्तेषामध्वनि श्रमः तेनातुरैः पीडितैर्वधूजनैः सेवितानान्निवेशनविभागैरावसतिकावच्छेदैः परिष्कृतानाम् अलङ्कृतानाम्। सम्पर्युपेभ्य इत्यादिना सुट्। वनपादपानामरण्यवृक्षाणाम्पुरे यदुपवनं कृत्रिमवनन्तत्र जाता पुरोपवनजा लक्ष्मीः शोभा जज्ञे जाता। अत्रान्योन्यलक्ष्मीसम्बन्धासम्भवात् तत्सदृशीति सादृश्याक्षेपादसम्भवे तद्वस्तुसम्बन्धेयन्निदर्शना। वसन्ततिलकावृत्तम्। उक्ता वसन्ततिलका तभजाजगौ ग इति लक्षणात्॥४०॥

इति श्रीमहोपाध्यायभारविकृतौ किरातार्ज्जुनीये महाकाव्ये सप्तमः सर्गः ॥ ७ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्ज्जुनीयव्याख्यायां घण्टापथसमाख्यायां सप्तमः सर्गः ॥ ७ ॥



## अष्टमः सर्गः ।



अथ स्वमायाकृतमन्दिरोज्ज्वलं
ज्वलन्मणि व्योमसदां सनातनम् ।
सुराङ्गनागोपतिचापगोपुरं
पुरं वनानां विजिहीर्षया जहुः ॥ १ ॥

अथेति । अथ निवेशनानन्तरं सुराङ्गना अप्सरसः स्वमायया स्वेच्छाविशेषेण कृतैर्निर्म्मितैर्म्मन्दिरैरुज्ज्वलं दीप्तं ज्वलन्तो मणयो यस्मिन् तद्व्योमसदाङ्गन्धर्व्वाणां सनातनं सदातनम् । सायञ्चिरमित्यादिना भवार्थे ट्युप्रत्ययः । गौर्व्वज्रं तत्पतिरिन्द्रस्तच्चापवर्णानि गोपुराणि यस्य तत्तथोक्तमित्युपमा । पुरन्नगरं वनानां विजिहीर्षया वनानि विहर्तुमिच्छया । कर्म्मणि षष्ठी । जहुस्तत्यजुः । जहातेर्लिट् । अत्र ज्वलं ज्वलदिति पुरम्पुरमिति चासकृद्व्यञ्जनद्वयावृत्त्या छेकानुप्रासः । अन्यत्र तद्वैपरीत्या वृत्त्यनुप्रास इति तयोरुपमायाश्च संसृष्टिः । अस्मिन् सर्गे वंशस्थं वृत्तम् । जतौ तु वंशस्थमुदीरितं जराविति लक्षणात् ॥ १ ॥

यथायथन्ताः सहितानभश्चरैः
प्रभाभिरुद्भासितशैलवीरुधः।
वनं विशन्त्योवनजायतेक्षणाः
क्षणद्युतीनान्दधुरेकरूपताम् ॥ २ ॥

निवृत्तवृत्तोरुपयोधरक्लमः
प्रवृत्तनिर्ह्रादिविभूषणारवः।
नितम्बिनीनाम्भृशमादधे धृति
न्नभःप्रयाणादवनौ परिक्रमः ॥ ३ ॥

यथायथमिति। यथायथं यथास्वं स्वकीयमनतिक्रम्ये-त्यर्थः। यथास्वे तु यथायथमित्यमरः। नपुंसकत्वात् ह्रस्वत्वम्। नभश्चरैर्गन्धर्वैर्मेघैश्च सहिताः प्रभाभिः स्वदीप्तिभिरुद्भासिताः शैलवीरुधोयाभिस्ताः पूर्वोक्तावनजायतेक्षणाः पद्मलोचनाः स्त्रियः वनं विशन्त्यः क्षणं द्युतिर्यासान्तासां क्षणद्युतीनां विद्युतामेकरूपतां समानरूपतान्दधुः। मुहुर्द्रुमान्तराले तासां स्फुरणस्य क्षणिकत्वादिति भावः। श्लेषानुप्राणितेयमुपमा श्लेषत्वमिति केचित्। उभयथाप्यनुप्रासेन संसर्गः॥ २॥

निवृत्तेति। निवृत्तोगतः वृत्तस्य वर्तुलस्य ऊरुपयोधरस्य क्लमस्तस्मिन्सः पादप्रक्षेपेषु विश्रान्तिसम्भवादिति भावः। किञ्च प्रवृत्तोजातोनिर्ह्रादिविभूषणानान्नूपुरादीनामारवो यस्मिन्सः। अवनौ पृथिव्यां परिक्रमः सञ्चारो

घनानि कामं कुसुमानि बिभ्रतः
करप्रचेयान्यपहाय शाखिनः।
पुरोऽभिसस्रे सुरसुन्दरीजनै
र्य्यथोत्तरेच्छा हि गुणेषु कामिनः॥ ४॥
तनूरलक्ताकणपाणिपल्लवाः
स्फुरन्नखांशूत्करमञ्जरीभृतः।

नितम्बिनीनां नभःप्रयाणात् भूयाम धिकम्। पञ्चमी वि-भक्ते इति पञ्चमी। धृतिं सन्तोषमादधे। अत्र विशिष्ट-परिक्रमस्य धृत्या दानहेतुत्वात्काव्यलिङ्गमलङ्कारः॥३॥

घनानीति। घनानि सान्द्राणि नतु विरलानि कर-प्रचेयानि हस्तग्राह्याणि अनुच्चानि। कृत्यैरधिकार्थवचने इति तृतीयासमासः। कामं कुसुमानि बिभ्रतः नवकुसु-मितान् शाखिनस्तरून् अपहाय सुरसुन्दरीजनैः पुरोऽग्रे अभिसस्रे अभिगतम्। भावे लिट्। तथाहि कामिनो-गुणेष्वतिशयेषु विषये उत्तरमुत्तरम्। वीप्सार्थेऽव्ययी-भावः। यथोत्तरमिच्छा येषान्ते यथोत्तरेच्छाः उत्तरो-त्तराभिलाषुकाहि। अत्र परिकरोत्थापितोऽर्थान्तरन्यासो-ऽलङ्कारः॥ ४॥

तनूरिति। विलेपनामोदैर्हृता आकृष्टावनालयोवन-भृङ्गास्तनूः कृशाः अलक्तैररुणाः पाणयएव पल्लवायासान्ताः स्फुरन्तोनखांशूनामुत्कराः पुञ्जाएव मञ्जर्य्यस्ता-

विलासिनीबाहुलतावनालयो
विलेपनामोदहृताः सिषेविरे ॥ ५ ॥
निपीयमानस्तवका शिलीमुखै
रशोकयष्टिश्चलबालपल्लवा।
विडम्बयन्ती ददृशे वधूजनै
रमन्ददष्टौष्ठकरावधूननम् ॥ ६ ॥

बिभ्रतीति तथोक्ताः। क्विप्। विलासिनीनां बाहव एव लतास्ताः। सिषेविरे। अत्र समस्तवस्तुविषयरूपकालङ्कारः बाह्ववयवानां लतावयवानाम्पल्लवादीनामपि निरूपणादिति ॥ ५ ॥

निपीयमानेति। शिलीमुखैरलिभिः। अलिबाणौ शिलीमुखावित्यमरः। निपीयमानः स्तवकोगुच्छो यस्याः सा चला बालपल्लवा यस्याः सा अतएवामन्दं दृढं दष्टः ओष्ठोयस्मिंस्तत्करावधूननङ्करकम्पनन्तत् विड़म्बयन्ती स्तवकपानेनौष्ठदशनम्पल्लवचलनेन करावधूननञ्चानुकुर्व्वतीत्यर्थः। धूञोण्यन्तात् ल्युट् णिचि धूञ्प्रीञोर्नुग् वक्तव्यः। अशोकयष्टिरशोकशाखेत्यर्थः। वधूजनैर्ददृशे दृष्टा। अत्र विड़म्बयन्तीति प्रस्तुताशोकशाखाविभूषणभूतोपमामहिम्ना अप्रस्तुतनायिकाप्रतीतेः समासोक्तिः उत्तिष्ठमानयैवोपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ६ ॥

अथ कश्चिन्मधुकराक्रान्ताङ्गाश्चिदाह। कराविति।

समुच्छ्वसत्पङ्कजकोशकोमलै-
रुपाहितश्रीण्युपनीवि नाभिभिः ।
दधन्ति मध्येषु वलीविभङ्गिषु
स्तनातिभारादुदराणि नम्रताम् ॥२४॥

समानकान्तीनि तुषारभूषणैः
सरोरुहैरस्फुटपत्रपङ्क्तिभिः ।
चितानि घर्म्माम्बुकणैः समन्ततो
मुखान्यनुत्फुल्लविलोचनानि च ॥२५॥

समुच्छ्वसदिति । समुच्छ्वसत्पङ्कजकोशकोमलैरुल्लसत्कमलमुकुलैरिव मुग्धैरित्युपमा । नाभिभिः प्रतारिकाख्यैः । अथ नाभिसंज्ञं वराङ्गं यस्य संज्ञा प्रतारिकेति केशवः । पुंल्लिङ्गतायान्तु कविरेवप्रमाणम् । उपनीवि नीवीसमीपे । उपाहितश्रीणि जनितशोभानि तथा वलीविभङ्गिषु ऊर्म्मिमत्सु मध्येषु जघनस्थलेषु स्तनातिभारात् नम्रतान्दधन्ति विभ्राणानि । वा नपुंसकस्येति नुमागमः । उदराणि च ॥ २४ ॥

समानेति । किञ्च घर्म्माम्बुकणैः स्वेदोदकविन्दुभिः समन्ततश्चितानि व्याप्तानि अनुत्फुल्लविलोचनानि अविकसदक्षीणि अतएव तुषारभूषणैः शीकरपरिवृतैः । तुषारौ हिमशीकरावित्यमरः । अस्फुटपत्रपङ्क्तिभिः अविकचदलावलिभिः । व्याकोशविकचस्फुटाद्यत्यमरः । सरोरुहैः समानकान्तीनित्युपमा । मुखानि च ॥ २५ ॥

विनिर्यतीनां गुरुखेदमन्थरं
सुराङ्गनानामनुसानु वर्त्मनः ।
सविस्मयं रूपयतो नभश्चरा
न्विवेश तत्पूर्वमिवेक्षणादरः ॥२६॥ कुलकम् ।
अथ स्फुरन्मीनविधूतपङ्कजा
विपङ्कतीरस्खलितोर्मिसंहतिः ।
पयोऽवगाढुं कलहंसनादिनी
समाजुहावेव वधूः सुरापगा ॥२७॥

विनिर्यतीनामिति । सविस्मयं रूपयतः पूर्वोक्तचरणादीनि वर्णयतो नभश्चरान् गन्धर्वान् तत्पूर्वमिव तदेव प्रथमं यथा इत्युत्प्रेक्षा । ईक्षणादरः आलोकनकौतुकं विवेश । पूर्वार्द्धं व्याख्यातम् । अत्र कुलके स्वभावोक्तिरुत्प्रेक्षाङ्गम् ॥ २६ ॥

सम्प्रति सलिलक्रीड़ावर्णनमारभते । अथेति । अथ पुष्पावचयानन्तरं स्फुरद्भिश्चलद्भिर्मीनैर्विधूतपङ्कजेति सहर्षत्वान्मुखवीक्षणोक्तिः विपङ्कम्पङ्करहितं विहारयोग्यमिति यावत् । तत्र तीरे स्खलिता विचलिता ऊर्मिसंहतिर्यस्याः सेति हस्तसंज्ञोक्तिः । कलहंसनादिनी कादम्बमद्ध्वतीति वाग्व्यापारोक्तिः । अतएव सुरापगा गङ्गा वधूरप्सरसः पयोऽवगाढुमवगाहितुम् । गाहेरिद्दत्वाद्विकल्पः । समाजुहावेव आकारयामास

प्रशान्तघर्म्माभिभवः शनैर्व्विवा
न्विलासिनीभ्यः परिमृष्टपङ्कजः ।
ददौ भुजालम्बमिवात्तशीकर
स्तरङ्गमालान्तरगोचरोऽनिलः ॥२८॥

गतैः सहावैः कलहंसविक्रमं
कलत्रभारैः पुलिनन्नितम्बिभिः ।
मुखैः सरोजानि च दीर्घलोचनैः
सुरस्त्रियः साम्यगुणान्निरासिरे ॥२९॥

वेत्युत्प्रेक्षा । हूतिराकारणाह्वानमित्यमरः । ह्वयतेर्लिट् । अभ्यस्तस्य चेति सम्प्रसारणम् ॥ २७ ॥

प्रशान्तेति । प्रशान्तघर्म्माभिभवः प्रशान्तोष्णबाधः । वा दान्तशान्तेत्यादिना निपातनात्साधुः । शनैर्व्विवान् मन्दं वहन् । वातेः शतृप्रत्ययः । परिमृष्टपङ्कजः पद्मगन्धीत्यर्थः । आत्तशीकरः कुतः तरङ्गमालानामन्तरे मध्ये गोचरः स्थानं यस्य सोऽनिलो विलासिनीभ्यो भुजावलम्बन्ददाविवेत्युत्प्रेक्षा । विशिष्टवायुसम्पर्कात्तयोच्छ्वसुरित्यर्थः ॥ २८ ॥

गतैरिति । सुरस्त्रियोऽप्सरसः सहावैः सविलासैः गतैः गतिभिः । नपुंसके भावे क्तः । कलहंसानां विक्रमङ्गतिं विलासविधुरमिति शेषः तथा नितम्बिभिः प्रशस्तनितम्बैः कलत्रभारैर्जघनभारैः पुलिनन्नितम्बभार-

विभिन्नपर्य्यन्तगमीनपङ्क्तय:
पुरोविगाढाः सखिभिर्म्मरुत्वतः।
कथञ्चिदापः सुरसुन्दरीजनैः
सभीतिभिस्तत्प्रथमं समपेदिरे॥३०॥

विगाढमात्रे रमणीभिरम्भसि
प्रयत्नसंवाहितपीवरोरुभिः।

शून्यमित्यर्थः तथा दीर्घलोचनैर्मुखैः सरोजानि च अलोचनानीति श्लेषः साम्यगुणात्समानगणत्वात् निरासिरे निरस्तवत्यः। गुणवद्गुणयोः कुतः साम्यमिति भावः। अस्यतेः कर्त्तरि लिट्। उपसर्गादस्यत्यूह्योर्वेति विकल्पादात्मनेपदम्॥२९॥

विभिन्नेति। विभिन्ना विच्युतसङ्घाताः पर्य्यन्तगाः प्रान्तगताः मीनानाम्पङ्क्तयो यासां ताः कुतः मरुत्वतः सखिभिरिन्द्रस्य सचिवैः गन्धर्व्वैः पुरः पूर्वं विगाढाः प्रविष्टाः तासां विश्वासार्थं गर्त्तग्राहादिपरीक्षार्थञ्चेति भावः। सभीतिभिः अप्रविष्टविषयत्वात्सभयैर्विषादिभिरिति पाठेप्ययमेवार्थोऽलक्ष्यः सुरसुन्दरीजनैः तदेव तद्गाहनं प्रथमं यथा तथा अतएव कथञ्चिद्भयात् कृच्छ्रेण आपः प्रपेदिरे जगाहिरे॥३०॥

विगाढेति। प्रयत्नेन संवाहिताः सञ्चारिताः पीवराः स्थूला ऊरवो याभिस्ताभिः रमणीभिः अम्भसि विगाढमात्रे प्रविष्टे एव सति। सुप्सुपेति समासः। मात-

विभिद्यमाना विससार सारसा-
नुदस्य तीरेषु तरङ्गसंहतिः ॥३१॥
शिलाघनैर्नाकसदामुरस्थलै
र्बृहन्निवेशैश्च वधूपयोधरैः ।
तटाभिनीतेन विभिन्नवीचिना
रुषेव भेजे कलुषत्वमम्भसा ॥३२॥

ङ्कात् स्वेऽवधारणइत्यमरः । विभिद्यमाना स्वयं विध्वंस्यमाना । कर्म्मकर्त्तरि शानच् । तरङ्गसंहतिस्तीरेषु सारसान् पक्षिविशेषान् । सारसोमैथुनी कामी गोनर्दः पुष्कराह्वयइति यादवः । यद्वा । सारसान् हंसान् । चक्राङ्गः सारसोहंसइति शब्दार्णवे । उदस्योत्थाप्य विससार वितस्तार ॥ ३१ ॥

शिलेति । शिलावद्घनैः कठिनैः नाकसदाङ्गन्धर्व्वाणां उरःस्थलैर्बृहन्निवेशैर्म्महासंस्थानैरतिस्थूलरित्यर्थः । वधूपयोधरैश्चतटमभितः नीतेन प्रापितेन अतएव विभिन्नवीचिना भग्नोर्म्मिणा अम्भसा कर्त्रा रुषेवेति हेतूत्प्रेक्षा कलुषत्वमाविलत्वमन्तः क्षोभश्चध्वन्यते भेजे । कर्म्मणि लिट् । यथा कश्चिन्मृदुस्वभावः केनचित्कठिनादिना साङ्गभङ्गन्ताडयित्वा निष्कासितः क्षुभ्यति तद्वदिति भावः । कलुषत्वमित्यत्र वाच्यप्रतीयमानयोरभेदाध्यवसायः । अन्यथा शुद्धवाच्यस्याविलत्वस्य रोषहेतुकत्वादुत्प्रेक्षानुविघातनादिति ॥ ३२ ॥

विधूतकेशाः परिलोलितस्रजः
सुराङ्गनानां प्रविलुप्तचन्दनाः ।
अतिप्रसङ्गाद्विहितागसो मुहुः
प्रकम्पमीयुः सभयादिवोर्मयः ॥३३॥

विपक्षचित्तोन्मथना नखव्रणा
स्तिरोहिता विभ्रममण्डनेन ये ।
हृतस्य शेषानिव कुङ्कुमस्य ता
न्विकत्थनीयान् दधुरन्यथा स्त्रियः ॥३४॥

विधूतेति । विधूता विक्षिप्ताः केशा यैस्ते परिलोलिता विलोलिताः स्रजो यैस्ते प्रविलुप्तचन्दनाः प्रमृष्टाङ्गरागाः अतिप्रसङ्गादविच्छेद सङ्गात्सुराङ्गनानां विहितागसः कृतमण्डनखण्डनरूपापराधाः अतएवोर्मयस्तरङ्गाः सभयादिव स्त्रीक्षोभीतादिव मुहुः प्रकम्पमीयुः । स्वाभाविकस्य कम्पस्य भयहेतुकत्वमुत्प्रेक्ष्यते । यद्वा सुराङ्गनानां विधूतकेशा इत्यादियोजना । सापेक्षत्वेऽपि गमकत्वात् समासः । स्त्रीसङ्ग्रहणसाहसमपराधः भयन्तु राजादिभ्य इति ॥ ३३ ॥

विपक्षेति । विपक्षस्य सपत्नीजनस्य चित्तानामुन्मथनाः व्यथका इत्यर्थः । बहुलग्रहणात्कर्त्तरि ल्युट् । ये नखव्रणाः नखक्षतानि । व्रणोऽस्त्रियामित्यमरः । विभ्रमस्य सौन्दर्यस्य मण्डनम् । तादर्थ्येऽश्वघासादिवत्

सरोजपत्रे नु विलीनषट्पदे
विलोलदृष्टेः स्विदमू विलोचने।
शिरोरुहाः स्विन्नतपक्ष्मसन्ततेर्
द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥ ३५ ॥
अगूढहासस्फुटदन्तकेसरं
मुखं स्विदेतद्विकसन्नु पङ्कजम्।

षष्ठीसमासः न तु चतुर्थीसमासः यूपदार्वादिवत्प्रकृतिविकाराभावादिति। तेन कुङ्कुमलेपादिना तिरोहिताः छन्नाः हृतस्य क्षालितस्य कुङ्कुमस्य व्यञ्जकत्वेन शेषानिवावशिष्टलेशानिव स्थितानित्युत्प्रेक्षा विकत्थनीयान् भर्तृवाल्लभ्यस्य व्यञ्जकत्वेन श्लाघनीयान् तान्नखव्रणान् स्त्रियोऽन्यथा दधुः प्रकाशान्दधुरित्यर्थः ॥ ३४ ॥

अथ युग्मेनाह। सरोजेत्यादिना। अमू पुरोवर्तिनी विलीन षट्पदे संसक्तभृङ्गे सकनीनिकत्वमक्ष्णोरर्थसिद्धमित्युपमानं विशिष्यते। सरोजपत्रे नु। यद्वा विलोलदृष्टेश्चञ्चलाक्ष्याः विलोचने स्वित्। नुस्विच्छब्दौ वितर्के। किञ्च नतपक्ष्मसन्ततेः चञ्चलाक्ष्याः। शिरोरुहाः स्वित् निशब्दं नीरवञ्च तत् निश्चलञ्च तत् द्विरेफ वृन्दं नु ॥ ३५ ॥

अगूढेति। किञ्च अगूढहासं व्यक्तस्मितन्तेन स्फुटाः दन्ताः केशरा इव दन्तकेसरा यस्य तत् मुखं स्वित् यद्वा विकसत्पङ्कजं नु इतीत्थं संशयेनेति शेषः नलिनीवने

इति प्रलीनां नलिनीवने सखीं
विदाम्बभूवुः सुचिरेण योषितः ॥३६॥ युग्मम् ॥

प्रियेण संग्रथ्य विपक्षसन्निधा
वुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥३७॥

असंशयं न्यस्तमुपान्तरक्ततां
यदेव रोद्धुं रमणीभिरञ्जनम्।

प्रलीनां निगूढां सखीं योषितः सुचिरेणातिविलम्ब्य विदाम्बभूवुः विविदुः निश्चिक्युरित्यर्थः। उषविदजागृभ्यो- ऽन्यतरस्यामिति विकल्पादाम्प्रत्ययः। अत्र युग्मे निश्चयान्तसन्देहालङ्कारः ॥ ३६ ॥

प्रियेणेति। काचित्प्रियेण संग्रथ्य स्वयमेव रचयित्वा विपक्षसन्निधौ सपत्नीजनसमक्षम्पीवरस्तने वक्षसि उपाहितां स्रजं मालाञ्जलाविलां म्लदितामपीत्यर्थः न विजहौ न तत्याज। ननु निर्गुणायान्तत्र का प्रीतिरिति वाच्यमित्यर्थान्तरन्यासेनाह। गुणाः प्रेम्णि वसन्ति वस्तुनि न वसन्ति हि। यत्प्रेमास्पदन्तदेव गुणवत् अन्यत्तु गुणवदपि निर्गुणमेव। प्रेम तु न वस्तुपरीक्षामपेक्षत इति भावः ॥ ३७ ॥

असंशयमिति। स्त्रीणां नेत्रशोभार्थम् अञ्जनधारण-

हृतेऽपि तस्मिन् सलिलेन शुक्लता-
न्निरास रागो नयनेषु न श्रियम् ॥३८॥
द्युतिं वहन्तो वनितावतंसका
हृताः प्रलोभादिव वेगिभिर्ज्जलैः।

मम्बुविहारोपगमाद्रक्तवर्णत्वञ्चाञ्जनान्ततः शुक्लत्वतिरोधा-नञ्च निश्चितमित्युत्प्रेक्ष्यते। रमणीभिर्यदञ्जनं न्यस्तन्त-दिति शेषः यत्तदोर्नित्यसम्बन्धात्। तदञ्जनमुपान्तयो-रक्ततां रोद्धुं प्रतिबद्धमेव न्यस्तं न तु शोभार्थमित्यर्थः। अन्यथा रागाभिव्यक्तया शुक्लत्वतिरोधानं स्यादित्यर्थः। असंशयमित्युत्प्रेक्षाव्यञ्जकं संशयस्याप्यभावः नात्रसंशयो-ऽस्तीत्यर्थः। अर्थाभावेऽव्ययीभावः। कुतएतदिति चेत् यतस्तस्मिन् अञ्जने सलिलेन हृते चालिते सत्यपि रागः पूर्वोक्तएवोपान्तरक्तता प्रतिबन्धाभावादभितोव्याप्येत्या-शयः। नयनेषुशुक्लतां निरास निरस्तवान्। अस्यते-र्लिट्। श्रियं शोभान्तु न निरास अतः शुक्लत्वविरोधिराग-निरोधार्थमेवेदमञ्जनं स्यान्नतु शोभार्थन्तस्यास्तदभावेऽपि सद्भावादित्यर्थः। अञ्जनापगमेऽपि तन्नयनानां राग-एवालङ्कारोऽभूदिति भावः। अत्राञ्जनन्यासमनूद्यतस्य शोभार्थत्वनिषेधेन रागरोधार्थत्वोत्प्रेक्षणम् उदितम् उत्तरार्द्धे तस्यैव समर्थनात्। एवमुपान्तरक्ततां रोद्धुं यद-ञ्जनं न्यस्तमित्येकान्वये विध्यनुवादविरोधः स्यात् ॥ ३८ ॥

द्युतिमिति। द्युतिं शोभान्तेजश्च वहन्तः वेगिभिर्जलै-

उपेत्य तास्तत्क्षणशोचनीयतां
च्युताधिकाराः सचिवा इवाययुः ॥३९॥
विपत्त्रलेखा निरलक्तकाधरा
निरञ्जनाक्षीरपि बिभ्रतीः श्रियम् ।
निरीक्ष्य रामा बुबुधे नभश्चरै-
रलङ्कृतं तद्वपुषैव मण्डनम् ॥४०॥

जडैरज्ञैश्च डलयोरभेदात् । जलं गोकलहं नीरं ह्रीबेरं
च जडोऽन्यवदिति विश्वः । प्रलोभान्मोहात् । हृताऽऽहृता गृही-
ताउपस्थिताश्छन्दिताः । यद्वा कर्त्तरि क्तः । सवमाना-
द्रूत्यर्थः । अन्यत्र धनग्रहणबन्धनादिना पीडितावनिता-
वतंसकाः च्युताधिकाराः भ्रष्टाधिकाराः सचिवा इव
तत्क्षणं शोचनीयतामाययुः प्रापुः ॥ ३९ ॥

विपत्त्रेति । विगताः पत्त्रलेखास्तिलकविशेषा यासा-
न्ता विपत्त्रलेखाः निरलक्तकाः क्षालितरागा अधरा यासा-
सान्ताः निरञ्जनानि अक्षीणि यासान्ताः निरञ्जनाक्षीरपि ।
बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् षिद्गौरादिभ्यश्चेति
ङीष् । तथापि श्रियं बिभ्रतीः शोभाकारणाभावेऽपि
शोभमाना इति विभावनालङ्कारः । रामा निरीक्ष्य नभ-
श्चरैर्गन्धर्व्वैः तासां वपुषैव मण्डनमलङ्कृतन्नतु मण्डनेन
तद्वपुरित्यर्थः इति बुबुधे ज्ञातम् । कर्म्मणि लिट् ।
स्वभावरमणीयानां किमलङ्करणैरिति भावः ॥ ४० ॥

तथेति । विलासिनीजनः पूर्व्वञ्जलविहारात्प्राक्

तथा न पूर्वं कृतभूषणादरः
प्रियानुरागेण विलासिनीजनः ।
यथा जलार्द्रो नखमण्डनश्रिया
ददाह दृष्टीः प्रतिपक्षयोषिताम् ॥४१॥
शुभाननाः साम्बुरुहेषु भीरवो
विलोलहारास्खलफेनपङ्क्तिषु ।

प्रियानुरागेण कृतोभूषणेष्वादरः आसक्तिर्येन सः अनुरक्तप्रियत्वात् सम्यक् प्रसाधितः सन्नपीत्यर्थः । विपक्षयोषितां सपत्नीनां दृष्टीश्चक्षूंषि तथा न ददाह न दुःखीचकार यथा जलार्द्रः सन् नखशब्देन नखक्षतानि लक्ष्यन्ते तान्येव मण्डनन्तस्य श्रियातत्कृतशोभयेत्यर्थः यथा ददाह तापयामास । मण्डनान्तरादपि नखमण्डनमनुरागादपि च तदनुभावएव सपत्नीनान्दुःखहेतुरिति भावः । जलार्द्रो ददाहेति विरुद्धकार्य्योत्पत्तिरूपोविषमालङ्कारः । विरुद्धकार्य्योत्पत्तिश्चेत्यादिलक्षणात् ।। ४१ ॥

शुभेति । शुभाननाविलोलहारा नितान्तगौर्य्योऽङ्गणाः । गौरोऽरुणे सिते पीतइति वैजयन्ती । भीरवः ताः स्त्रियः साम्बुरुहेषु चलाः फेनपङ्क्तयोयेषु तेषु हृतानि कुङ्कुमानि येस्तेषु कुङ्कुमसङ्क्रमारुणेष्वित्यर्थः । ऊर्म्मिषु विषये अत्यमत्यर्थम्परभागङ्गुणोत्कर्षं न लेभिरे । परभागोगुणोत्कर्षइति यादवः । तासामूर्म्मीणाञ्चारु-

नितान्तगौर्य्योहृतकुङ्कुमेष्वल
न्न लेभिरे ताः परभागमूर्म्मिषु ॥४२॥
ह्रदाम्भसि व्यस्तवधूकराहते
रवं मृदङ्गध्वनिधीरमुज्झति।
मुहुस्तनैस्तालसमं समाददे
मनोरमं नृत्यमिव प्रवेपितम् ॥४३॥

त्वादिगुणसाम्यात् न किञ्चिद्विशेषो लक्ष्यत इत्यर्थः। अत एव सामान्यालङ्कारः। सामान्यं गुणसाम्येन यत्र वस्त्वन्तरकतेति लक्षणात्। शुभाननत्वसाम्यरुहत्वाद्युभयविशेषणानां क्रमेणोभयस्मिन् समन्वयाद्यथासङ्ख्यालङ्कारश्च। यथासङ्ख्यं क्रमेणैव क्रमिकाणां समन्वयादिति काव्यप्रकाशे लक्षणात्। अनयोरङ्गाङ्गिभावेन सङ्करः॥४२॥

ह्रदेति। व्यस्ताभ्यां विपर्य्यासिताभ्यां वधूकराभ्याम् आहते एकेन करेणोत्तानेनान्येन ताड़ित इत्यर्थः। ह्रदाम्भसि मृदङ्गध्वनिवत् धीरङ्गम्भीरं रवमुज्झति सति तथा ध्वनति सतीत्यर्थः। मुहुस्तनैस्तालो गीतवाद्यनृत्यानां कालपरिच्छेदः। तालः कालक्रियामानमित्यमरः। तत्समसमनुरूपं मनोरमं नृत्यमिव प्रवेपितम्प्रकम्पितम्। भावे क्तः। समाददे स्वीकृतम्। उपमालङ्कारः॥४३॥

श्रियेति। श्रिया शोभता कमलानि हसद्भिः कनक-

श्रिया हसद्भिः कमलानि सस्मितै
रलङ्कृताम्बुः प्रतिमागतैर्मुखैः ।
कृतानुकूल्या सुरराजयोषिता
प्रसादसाफल्यमवाप जाह्नवी ॥४४॥
परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः ।

सदृशैरित्यर्थः । हसतीर्ष्यत्यसूयतीति दण्डिना सदृश-पर्यायपराभक्ताः । सस्मितैः प्रतिमागतैः प्रतिबिम्बगतै-रित्यर्थः । प्रतिमानम्प्रतिबिम्बं प्रतिमेत्यमरः । मुखै-रलङ्कृतान्यम्बूनि यस्याः सा । किञ्च सुरराजयोषितां कृतमानुकूल्यं विहाराद्युपकारो यया सा इत्थं योषिद्भि-रुपकृता स्वयञ्च तासामुपचिकीर्षुः जाह्नवी गङ्गा प्रसा-दस्य स्वच्छत्वस्य साफल्यम् । अर्थगौरववत् षष्ठीसमास-निर्वाहः । अवापअप्रसन्नाम्भसि विहारविम्बग्रहण-योरसम्भवादित्यर्थः । स्वच्छा एवहि परैरुपक्रियन्ते स्वय-ञ्चोपकुर्वते तेषामिति भावः । कृतानुकारेति पाठेऽनु-कारोऽनुकूलकरणमुपकार इत्येवं व्याख्येयम् । अत्र जा-ह्नवी विशेषणपदार्थस्य साफल्यम्प्रति हेतुत्वात्काव्यलि-ङ्गमलङ्कारः ॥ ४४ ॥

परीति । परितः स्फुरद्भिर्विवर्त्तमानैर्मीनैर्विघट्टि-ताऊरवो यासान्ता अतएव त्रासविलोलदृष्टयः । भयवि-

उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम् ॥४५॥
भयादिवाश्लिष्य झषाहतेऽम्भसि
प्रियं मुदानन्दयति स्म मानिनी।
अकृत्रिमप्रेमरसाहितैर्मनो
हरन्ति रामाः कृतकैरपीहितैः ॥४६॥

कम्पनेत्राः कम्पितपाणिपल्लवाश्च सुराङ्गनाः सखीजनस्यापि विलोकनीयतामुपाययुः। किमुत प्रियजनस्येति भावः। स्वभावोक्तिरलङ्कारः ॥ ४५ ॥

भयादिति। मानिनी दुर्लभस्वयंग्रहणेति भावः अम्भसि जले झषेण मत्स्येन आहते सति। पृथुलोमा झषो मत्स्य इत्यमरः। भयादिव वस्तुतस्तु न तथेति भावः किन्तु मुदा औत्सुक्येनैवाश्लिष्य प्रियमानन्दयति स्म। तथाहि रामाः स्त्रियः अकृत्रिमोऽनारोपितो यः प्रेमैव रसस्तेनाहितैर्जनितैः कृतकैः कृत्रिमैरपीत्यर्थः ईहितैश्चेष्टितैर्मनो हरन्ति। आरोपितमपि भयं प्रेममूलत्वान्मनोहरं बभूवेत्यर्थः। अत्राल्पानुभवेन भयेन सहजरागनिगूहनान्मीलनालङ्कारः। मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनमिति लक्षणात्तस्मादर्थान्तरन्यासेन संसृज्यते ॥ ४६ ॥

तिरोहितेति। अपां विगाहान्वितान्तमाकुलैः विकीर्णैः प्रसारिभिरायतैरलकैः केशैस्तिरोहितान्तानि

तिरोहितान्तानि नितान्तमाकुलै
रपां विगाहादलकैः प्रसारिभिः।
ययुर्बधूनां वदनानि तुल्यतां
द्विरेफवृन्दान्तरितैः सरोरुहैः ॥४७॥

करौ धुनाना नवपल्लवाकृती
पयस्यगाधे किल जातसंभ्रमा।
सखीषु निर्व्वाच्यमधार्ष्ट्यदूषित
प्रियाङ्गसंश्लेषमवाप मानिनी ॥४८॥

छन्नप्रान्तानि बधूनां वदनानि द्विरेफवृन्दैरन्तरितानि छन्नानि सरोरुहाणि तैः सरोरुहैः तुल्यतां ययुरित्युपमालङ्कारः ॥ ४७ ॥

करावित्ति। मानिनी पयस्यगाधे सति किलेत्यलीके मज्जनभयादिवेत्यर्थः। जातसम्भ्रमा उत्पन्नभया अतएव नवपल्लवाकृती करौ धुनाना कम्पयन्ती। धुनोतेः क्र्यादिकात् कर्त्तरि लटः शानच्। सखीषु विषये निर्वाच्यमवाच्यमनिन्द्यमित्यर्थः। धार्ष्ट्यदूषितञ्च न भवतीत्यधार्ष्ट्यदूषितस्तं वस्तुतोरागमूलमपि भयमूलत्वारोपादिति भावः प्रियाङ्गसंश्लेषमवाप। अत्रापि तुल्याङ्गेन भयेनागन्तुकेन सहजानुरागनिगूहनान्मीलनालङ्कारः। तदुक्तङ्काव्यप्रकाशे। समानलक्षणं वस्तु वस्तुना यन्निगूह्यते। निजेनागन्तुना वापि तन्मीलनमुदाहृतम् ॥ ४८ ॥

प्रियैः सलीलङ्करवारिवारितः
प्रवृद्धनिःश्वासविकम्पितस्तनः।
सविभ्रमाधूतकराग्रपल्लवो
यथार्थतामाप विलासिनीजनः ॥४६॥

उदस्य धैर्य्यन्दयितेन सादर
प्रसादितायाः करवारिवारितम्।

प्रियैरिति। प्रियैः कामिभिः सलीलं करवारिभिरञ्जलिजलैर्वारितोऽवरुद्धः सिक्तइत्यर्थः। प्रवृद्धैः सन्ततैर्निश्वासैर्व्विकम्पितौ कम्पितौ स्तनौ यस्य सः सविभ्रमं सविलासमाधूतानि कराग्रपल्लवानि पाणिपल्लवानि येन सः। विलसनशीला विलासिनी। वौकसलसकत्थस्रम्भइति घिनुण्प्रत्ययः। सैवजनः। जातावेकवचनम्। यथार्थतामाप उक्तरीत्या अनेकविलासवत्तया यथार्थनामकत्वमवापेत्यर्थः। क्वचिद्गम्यमानार्थस्य नाम्नोन प्रयोगः। यथा माघे चिराय याथार्थ्यमलम्भि दिग्गजैरिति। क्वचित् प्रयुज्यते च यथा रघुवंशे। परन्तपोनाम यथार्थनामेति। नैषधेऽपि स जयत्यरिसार्थसार्थकी कृतनामा किल भीमभूपतिरिति। स्वभावोक्तिरलङ्कारः ॥ ४६ ॥

उदस्येति। दयितेन धैर्य्यङ्काठिन्यमुदस्यापनीय अनुनीयेत्यर्थः सादरं यथा तथा प्रसादितायाः सौमनस्यङ्गमितायाः नतभ्रुवः स्त्रियः सम्बन्धि करवारिभिर्वारितमव-

मुखन्निमीलन्नयनन्नतभ्रुवः
श्रियं सपत्नीवदनादिवाददे ॥५०॥
विहस्य पाणौ विधृते धृताम्भसि
प्रियेण वध्वा मदनार्द्रचेतसः ।
सखीव काञ्ची पयसा घनीकृता
बभार वीतोच्चयबन्धमंशुकम् ॥५१॥

कङ्कमतएव निमीलती नयने यस्य तन्मुखं सपत्नीवदना-
दिव श्रियमाददे जग्राह। तदानीन्तद्वदनस्य निःश्रीकत्वा-
त्तदीयश्रीग्रहणमुत्प्रेक्ष्यते ॥ ५० ॥

विहस्येति। धृताम्भसि प्रियसेचनार्थं गृहीतजले पाणौ अञ्जलावित्यर्थः प्रियेण विहस्य विधृते अवलम्बिते सति अतएव मदनार्द्रचेतसः मदनपरवशायाइत्यर्थः वध्वाः सम्बन्धि वीतोच्चयबन्धं मुक्तनीविग्रन्थि स्रंसमान-मित्यर्थः अंशुकम्पयसा घनीकृता काञ्चीसखीव बभार जग्राह। स्त्रीणां किल स्त्रीष्वेवायत्तं लज्जारक्षणमिति भावः ॥ ५१ ॥

निरञ्जने इति। नतभ्रुवोऽङ्गनायाः विग्रहे वपुषि निरञ्जने निर्द्धौतकज्जले दृशौ विलोचने कर्म्म साचि-विलोकितन्तिर्यगीक्षणं कर्त्तुं मण्डयति स्म। तिर्य्यगर्थे साचि तिरइत्यमरः। अयावकं क्षालितलाक्षारागमोष्ठ-पल्लवं वेपथुः कम्पोमण्डयति स्म । द्वितोयुजित्यथुच्-प्रत्ययः। अतिलकन्तिलकरहितन्तदास्यं तिलकस्यानं

निरञ्जने साचिविलोकितं दृशा
वयावकं वेपथुरोष्ठपल्लवम् ।
नतभ्रुवो मण्डयति स्म विग्रहे
बलिक्रिया चातिलकन्तदास्पदम् ॥५२॥

निमीलदाकेकरलोलचक्षुषा
प्रियोपकण्ठं कृतगात्रवेपथुः ।
निमज्जतीनां श्वसितोद्धतस्तनः
श्रमोनु तासां मदनोनु पप्रथे ॥५३॥

ललाटम् । आस्पदं प्रतिष्ठायामिति निपातः । बलिक्रियारेखावन्धश्च मण्डयति स्म । तदा निरलङ्कारस्याङ्गनाशरीरस्य तच्छरीरविकारैरेवालङ्कारः समजनीत्यर्थः ॥ ५२ ॥

निमीलदिति । प्रियोपकण्ठम्प्रियसमीपे । अत्यन्तसंयोगेद्वितीया । निमज्जतीनां विगाहमानानाम् अतएव निमिलन्ति निमिषन्ति आकेकराणि आकेकरवन्ति लोलानि चक्षूंषि यासान्तासाम् । आकेकरलक्षणन्तु नृत्यविलासे । दृष्टिराकेकरा किञ्चित् स्फुटापाङ्ग प्रसारिता । मीलितार्द्धपुटा लोके ताराव्यावर्त्तनोत्तरेति । तासां स्त्रीणां कृतोगात्राणां वेपथुः कम्पोयेन सः श्वसितैर्निःश्वासैरुद्धतावुत्पतितौ स्तनौ येन सः श्रमः खेदोनु मदनोनुपप्रथे प्रादुर्बभूव । निमज्जनप्रियसन्निधानरूपोभयका-

प्रियेण सिक्ता चरमं विपक्षत
श्चुकोप काचिन्न तुतोष सान्त्वनैः।
जनस्य रूढप्रणयस्य चेतसः
किमप्यमर्षोऽनुनये भृशायते ॥५४॥

इत्थं विहृत्य वनिताभिरुदस्यमान
म्पीनस्तनोरुजघनस्थलशालिनीभिः।
उत्सर्पितोर्म्मिचयलङ्घिततीरदेश
मौत्सुक्यनुन्नमिव वारि पुरः प्रतस्थे ॥५५॥

रणरणकमवाक्षेत्रनिमीलनगात्रकम्पनिश्वासधारणाञ्च सन्देहः स एवालङ्कार ॥५३॥

प्रियेणेति। काचित् प्रियेण विपक्षतः सपत्नीतश्चर-मम्पश्चात्सिक्ता सती चुकोप। पृष्ठन्तु चरमन्तनोरित्य-मरः। सान्त्वनैरनुनयैर्न तुतोष। तथाहि रूढप्रणयस्य गाढ़प्रेम्णोजनस्य सम्बन्धी चेतसोमनसोऽमर्षः प्रकोपः किमपि कुतोऽपि हेतोरनुनये सति भृशायते गाढोभवति। भृशादिभ्योभुव्यच्वेर्लोपश्च हलइति क्यङ्। अन्यत्र शान्ति-हेतुरनुनयः अत्र प्रकोपायैव भवति तत्र कारणन्तु न ज्ञायतइत्यर्थः ॥५४॥

इत्थमिति। पीनैस्तनैरूरुभिर्ज्जघनस्थलैश्च शाल-न्तइति तथोक्ताभिरिति सखिलनोदनसामर्थ्योक्तिः। स्थलस्य साक्षादप्राण्यङ्गत्वान्न द्वन्द्वैकवद्भावः। वनिता-

तीरान्तराणि मिथुनानि रथाङ्गनाम्नां
नीत्वा विलोलितसरोजवनश्रियस्ताः ।
संरेजिरे सुरसरिज्जलधौतहारा
स्तारावितानतरलाइव यामवत्यः ॥५६॥
सङ्क्रान्तचन्दनरसाहितवर्णभेदं
विच्छिन्नभूषणमणिप्रकरांशुचित्रम् ।

भिरित्थं विह्वलोदस्यमानं नुद्यमानम् उत्सर्पितैरुपरिभाव-स्थापितैरूर्मिचयैर्लङ्घितस्तीरदेशो येन तद्वारि औत्सुक्यं विहारासहिष्णुत्वं तेन नुन्नमेरितमिवेत्युत्प्रेक्षा । नुद-विदेत्यादिना निष्ठानत्वम् । पुरोऽग्रे प्रतस्थेऽसज्जनवदिति भावः ॥ ५५ ॥

तीरान्तराणीति । रथाङ्गनाम्नां मिथुनानि चक्र-वाकद्वन्द्वानि अन्यानि तीराणि तीरान्तराणि नीत्वा नियोज्येत्यर्थः । अविहितलक्षणस्तत्पुरुषो मयूरव्यंसका-दिषु द्रष्टव्यः । विलोलिता विलुलिताः सरोजवनश्रियो-याभिस्ताः सुरसरिज्जलैर्धौतहाराः क्षालितमुक्तावल-यस्ताः स्त्रियस्तारावितानैरुडुगणैस्तरलाभासुराः । तर-लोभासुरे हारे चञ्चलेऽपीति वैजयन्ती । यामवत्यो रात्र-यइव संरेजिरे शुशुभिरे ॥ ५६ ॥

सङ्क्रान्तेति । सङ्क्रान्तैश्चन्दनरसैर्मलयजद्रवैराहितो-वर्णभेदो रूपान्तरं यस्य तत् विच्छिन्नानि त्रुटितानि यानि विभूषणानि तेषां ये मणिप्रकराः मणिगणास्तेषा-

बद्धोर्म्मि नाकवनितापरिभुक्तमुक्तं
सिन्धोर्बभार सलिलं शयनीयलक्ष्मीम् ॥५७॥

इति श्रीमहोपाध्यायभारविकृतौ किराता-
र्ज्जुनीये महाकाव्ये सुराङ्गनाविहारो नाम
अष्टमः सर्गः ॥ ८ ॥

संशुभिश्चित्रनानावर्णं बद्धोर्म्मितरलत्तरङ्गितन्नाकवनि-ताभिः परिभुक्तमुक्तं पूर्वं परिभुक्तम्पश्चान्मुक्तम् । पूर्वकाले-त्यादिना तत्पुरुषः । सिन्धोर्गङ्गायाः सलिलं शेरते अत्रेति शयनीयन्तल्पम् । बहुलग्रहणात्साधुः । तस्य लक्ष्मीम्बभार । अतएव निदर्शनालङ्कारः । लक्षणन्तु-क्तम् ॥ ५६ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविर-चितायां किरातार्ज्जुनीयव्याख्यायां घण्टापथसमाख्यायां अष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ।

वीक्ष्य रन्तुमनसः सुरनारी
रात्तचित्रपरिधानविभूषाः ।
तत्प्रियार्थमिव यातुमथास्त
म्भानुमानुपपयोधि ललम्बे ॥ १ ॥
मध्यमोपलनिभे लसदंशा
वेकश्चुग्रतिमुपेयुषि भानौ ।

वीक्ष्येति । अथ जलक्रीड़ानन्तरम्भानुमानंशुमान् सूर्यः आत्तचित्रपरिधानविभूषाः स्वीकृतविविधवस्त्राभरणाः सुरतसन्नाहं वहन्तीरित्यर्थः अतएव रन्तुमनसः । समानकर्तृकेषु तुमुन् लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपीति मकारलोपः । सुरनारीं वीक्ष्य तासाम्प्रियार्थन्तत्प्रियार्थमिव अवसरदानरूपम्प्रियङ्कर्तुमिवेत्यर्थः । फलोत्प्रेक्षेयम् । अस्तमदर्शनम् । मकारान्तमव्ययमेतत् । यातुम्प्राप्तुमुपपयोधि पयोधिसमीपे ललम्बे स्रंसे । अस्मिन्सर्गे स्वागतावृत्तम् । स्वागतेति रनभाद्गुरुयुग्मम् इति लक्षणात् ॥ १ ॥

मध्येति । मध्यमोपलनिभे नायकमणिसदृशे । निभ-

द्यौरुवाह परिवृत्तिविलोलां
हारयष्टिमिव वासरलक्ष्मीम् ॥२॥
अंशुपाणिभिरतीव पिपासुः
पद्मजं मधु भृशं रसयित्वा।
क्षीवतामिव गतः क्षितिमेष्यन्
लोहितं वपुरुवाह पतङ्गः ॥३॥

सङ्काशनीकाशप्रतिरूपोपमादयइत्यमरः। शर्करायां दृषत्पुत्रे पुंस्यश्मन्युपलोमणाविति वैजयन्ती। लसदंशौ असरद्रश्मौ भानौ एकतः एकस्मिन्भागे च्युतिं स्रस्ततामुपेयुषि प्राप्ते सति द्यौः परिवृत्त्या मध्याह्नातिक्रमेण विलोलाङ्गत्वरीम् अन्यत्र गात्रस्य तिर्यग्गावृत्त्या मुहुश्चलन्तीं वासरलक्ष्मीं हारयष्टिं मुक्तावलीमिवोवाह वहति स्म॥२॥

अंशुपाणिभिरिति। पतङ्गः सूर्यः। पतङ्गौ पक्षिसूर्यौ चेत्यमरः। अतीव निर्भरम्। अत्यतीव च निर्भरमित्यमरः। पातुमिच्छुः पिपासुः तृषितः सन्। पिबतेःसन्नन्तादुप्रत्ययः। अंशवएव पाणयस्तैः पद्मेषु जातम्पद्मजं मधु मद्येव। मध्विति श्लिष्टं रूपकम्। मकरन्दमद्यमित्यर्थः। मधु मद्ये पुष्परसइत्यमरः। भृशमत्यन्त रसयित्वाआसाद्य क्षीवताम्मत्तत्वङ्गइवेत्युत्प्रेक्षा। मत्ते शौण्डोत्कटक्षीवाइत्यमरः। क्षितिमेष्यन् गमिष्यन् लोहितं रक्तं वपुरुवाह। यथा मत्तः क्षितौ

गव्यतामुपगते नयनानां
लोहितायति सहस्रमरीचौ।
आससाद विरहय्य धरित्रीं
चक्रवाकहृदयान्यभितापः ॥४॥
मुक्तमूललघुरुज्झितपूर्व्वः
पश्चिमे नभसि सम्भृतसान्द्रः।

लुठति रज्यते च तद्वदिति भावः। सूर्य्यस्य क्षितिविलयनमस्तमयइत्यागमः। अत्र रूपकोत्प्रेक्षयोः सापेक्षत्वादङ्गाङ्गिभावेन सङ्करः॥३॥

गव्यतामिति सहस्रमरीचौ सूर्य्ये लोहितोभवतीति लोहितायति। लोहितादिडाज्भ्यः क्यषिति क्यष् वा क्यषइति परस्मैपदे शतृप्रत्ययः। अतएव नयनानाङ्गव्यतानुपगते दर्शनीयतां प्राप्ते सति अभितापः धरित्रीं विहरय्य विहाय। ल्यपि लघुपूर्व्वादित्ययादेशः। चक्रवाकहृदयान्तासमाद प्राप। अत्र धरित्र्यायादेशः तीव्रार्ककरकृतसन्तापस्ताइक् चक्रवाकहृदयेषु विरहसन्तापः सञ्जातइति परमार्थः। परन्तु तदुपक्रमानन्तरमेतस्याविर्भावात्सएवायं सङ्क्रान्तइत्यभेदाध्यवसायेनोपदेशः। अतएव भेदे अभेदरूपातिशयोक्तिरलङ्कारः॥४॥

मुक्तेति। रवौ सामि मज्जति अर्द्धास्तमिते सति। सामित्वर्द्धे जुगुप्सायामित्यमरः। मुक्तन्त्यक्तप्रायं मूलमाश्रयभूतोरविरन्यत्र स्वामी येन सः अतएव लघुरल्पकश्च

सापि मज्जति रवौ न विरेजे
खिन्नजिह्म इव रश्मिसमूहः ॥५॥
कान्तदूत्य इव कुङ्कुमताम्राः
सायमण्डनमभि त्वरयन्त्यः।
सादरन्ददृशिरे वनिताभिः
सौधजालपतितारविभासः ॥६॥

मुक्तमूललघुः उज्झितपूर्वः त्यक्तपूर्वदिक्कः अन्यत्र त्यक्त-पूर्वजनः पश्चिमेनभसि पश्चिमनभोभागेऽन्यत्र क्वचिन्नीच-स्थले सम्भृतः संहतः सन् अतएव सान्द्रस्य रश्मिसमूहः आश्रितजनस्य ध्वन्यते। दुःखेन खिन्नः सन् जिह्मोदीन-इव न विरेजे। अत्र मुक्तत्वादिप्रस्तुतविशेषणसाम्याद-प्रस्तुताश्रितजनप्रतीतेः समासोक्तिः तत्र वाच्यस्य रश्मिस-मूहस्याचेतनस्यापि प्रतीयमानेन चेतनेनाभेदाभिधानात् दुःखितत्वाद्युत्प्रेक्षेति तयोरङ्गाङ्गिभावेन सङ्करः ॥ ५ ॥

कान्तेति। कुङ्कुमवत्कुङ्कुमेन वा ताम्राः सायस्य सायङ्कालस्य। सायं साये प्रगे प्रातरित्यमरः। यन्मण्डन-स्तदभि तदुद्दिश्यत्वरयन्त्यस्त्वरां कारयन्त्यः सौधायाञ्जाल-र्गवाक्षैः पतिताः प्रविष्टाः। जालङ्गवाक्षमानायइति वैजयन्ती। रविभासः सूर्यरश्मयः कान्तानाम्प्रेयसान्दू-त्यइव वनिताभिः सादरं यथा तथा ददृशिरे दृष्टाः। सायन्तनार्कभासाम्प्रियसमागमसूचकत्वादेव दूत्याइव तासु स्त्रीणामादरोऽभवदित्यर्थः ॥ ६ ॥

अग्रसानुषु नितान्तपिशङ्गै
र्भूरुहान्मृदुकरैरवलम्ब्य।
अस्तशैलगहनन्नु विवस्वा
नाविवेश जलधिन्नु महीन्नु ॥७॥
आकुलश्चलपतत्रिकुलाना
मारवैरनुदितौषसरागः।

अग्रेति। विवस्वान् सूर्य्यः अग्रेऽस्तशैलशिखरे ये सानवस्तेषु ये भूरुहास्तान् नितान्तपिशङ्गैरत्यन्तारुणैर्मृदुभिः करैरिव करैरंशुहस्तैरिति श्लिष्टरूपकम्। बलिहस्तांशवः करा इत्यमरः। यद्वा। करैर्मृदु सुयमवलम्ब्य अस्त इति शैलोऽस्तशैलः। अस्तस्तु चरमः क्ष्माभृदित्यमरः तस्य गहनं काननं नु जलधिं नु महीं नु आविवेश। तपनस्य तपनसन्देह एव दृष्टः। तपनं तु विवस्वाऽस्य तन्न ज्ञायते शीघ्रगमनादित्यर्थः। अत्र तपने पतनस्यारोपमाणस्य गहनाद्यनेकविषयत्वेन सन्देहात्सन्देहालङ्कारः उत्प्रेक्षेति केचित् ॥ ७ ॥

आकुलइति। चलानां कुलायेभ्यः कुलायान्प्रति चलतां पतत्रिकुलानामारवैः शब्दैराकुलो व्याप्तः। अनुदित इत्यशब्देनाभावमात्रमुक्तः शब्देन सन्ध्यामात्रञ्च विवक्ष्यते उषसि भवः औषसः। सन्धिवेलेत्यादिना योगविभागादण्प्रत्ययः अन्यथा कालात् ठञ् स्यात्। तथा चानुदितौषसराग इत्यविद्यमानसन्ध्याराग इत्यर्थः। एकताप-

आययावहरिदश्वविपाण्डु

तुल्यतान्दिनमुखेन दिनान्तः ॥८॥

आस्थितः स्थगितवारिदपङ्क्त्या

सन्ध्यया गगनपश्चिमभागः।

सोर्म्मिविद्रुमवितानविभासा

रञ्जितस्य जलधेः श्रियमूहे ॥९॥

प्राञ्जलावपि जने नतमूर्ध्नि

प्रेम तत्प्रवणचेतसि हित्वा।

गमादन्यत्रानुदयाच्चेति भावः अहरि दश्वोऽविद्यमानसूर्य्यः एकत्रानुदयादन्यत्रास्तमयाच्चेति भावः अतएव विपाण्डुः तिमिरानुदयादिति शेषः दिनान्तः सायङ्कालो दिनमुखेन प्रातःकालेन तुल्यतामाययौ तद्वद्बभूवेत्यर्थः। अतएवोपमालङ्कारः ॥ ८ ॥

आस्थितइति। स्थगितवारिदपङ्क्त्या पिहितमेघवृन्दया सन्ध्यया आस्थितः आक्रान्तोव्याप्तः गगनपश्चिमभागः सोर्म्मि रूर्म्मिसङ्क्रान्तेत्यर्थः तया विद्रुमवितानविभासा प्रवालप्रकरकान्त्या रञ्जितस्य स्वसावर्ण्यमापादितस्य जलधेः श्रियमूहे सन्ध्याया रक्तवर्णत्वादिति भावः। वहतेः कर्त्तरि लिट्। तत्सदृशीं श्रियमुवाहेत्यर्थः। अतएव निदर्शनालङ्कारः ॥ ९ ॥

प्राञ्जलाविति। प्रबद्धः अञ्जलिर्येन तस्मिन् प्राञ्जलौ

सन्ध्ययानुविदधे विरमन्त्या
चापलेन सुजनेतरमैत्री ॥१०॥

औपसातपभयादपलीनं
वासरच्छविविरामपटीयः।
सन्निपत्य शनकैरिव निम्ना-
दन्धकारमुदवाप समानि ॥११॥

बद्धाञ्जलौ। तौ युतावञ्जलिः पुमानित्यमरः। प्रादिभ्यो-धातुजस्य बहुब्रीहिर्व्वाच्योवाचोत्तरपदलोपश्च। नत-मूर्द्ध्नि नमस्कुर्व्वाणे तत्प्रवणं तत्र सन्ध्यायामेवाहितश्चेतो-यस्य यस्मिन् एवंविधेऽपि जने विषये प्रेम हित्वा वहाय विरमन्त्या निवर्त्तमानया। व्याङ्परिभ्योरमइति परस्मै-पदम्। सन्ध्यया चापलेनास्थैर्य्येण। युवादित्व दण्-प्रत्ययः। सुजनादितरोदुर्जनस्तस्य मैत्री सख्यमनविदधे अनुचक्रे। कर्म्मणि लिट्। यथा दुर्ज्जनमैत्री खिद्यन्त-मपि जहाति तद्वत्सन्ध्यापि सेवकजनमहासीदित्यर्थः। मित्रस्य कर्म्म मैत्री। अणन्तात् ङीप्। अत्र सन्ध्या-दुर्ज्जनमैत्रेरश्चापलं समानधर्म्मः अनुविधानमतएव। अर्थ-रूपेणयमुपमा ॥१०॥

औपसेति। औपसात्प्राभातिकादातपाद्भयन्तस्मादि-वेत्युत्प्रेक्षा। अपलीनं क्वचिद्गूढं वासरच्छवेरातपस्य विरामात् हेतोः पटीयः प्रभविष्णुतरमन्धं करोतीत्यन्ध-कारं ध्वान्तम्। अन्धकारोऽस्त्रियां ध्वान्तमित्यमरः।

एकतामिव गतस्य विवेकः
कस्यचिन्न महतोऽप्युपलेभे ।
भास्वता निदधिरे भुवनाना
मात्मनीव पतितेन विशेषाः ॥१२॥
इच्छतां सह वधूभिरभेदं
यामिनीविरहिणां विहगानाम् ।

अथ सन्ध्यापगमनानन्तरं शनकैर्मन्दमन्दं निम्नात्मनिपत्यागत्य समानि समस्थलानि उदवाप व्यानशे । अत्र प्रस्तुतान्धकारविशेषणसाम्यादप्रस्तुतार्थप्रतीतेः समासोक्तिरलङ्कारः । उत्प्रेक्षालङ्कृतः स्यात् ॥ ११ ॥

एकतामिति । एकतामभेदङ्गतस्येव तमोव्याप्ततया प्रतीतेरियमुत्प्रेक्षा । महतः शैलादेरपि कस्यचित् कस्यापि पदार्थस्य विवेकोभेदोनोपलेभे न गृहीतः । अतएवोत्प्रेक्ष्यते पतितेनास्तमितेन भास्वता सूर्येण भुवनानाम्भुवनस्थपदार्थानामित्यर्थः । विशेषाभूधरादिभेदाः आत्मनि स्वस्मिन्नेव निदधिरे इव निहिताइव । कथमन्यथा नोपलब्धेरन्नित्यर्थः । अत्रोत्प्रेक्षयोः सजातीययोः सापेक्षत्वादङ्गाङ्गिभावेन सङ्करः ॥ १२ ॥

इच्छतामिति । वधूभिः स्वकामिनीभिः सहाभेदमवियोगमिच्छतां तथासङ्कल्पवतामपीत्यर्थः यामिनीषु विरहिणां नियमवियोगानामित्यर्थः । रहतेरावश्यकेऽर्थे णिनिः यद्वा निन्दायामिनिः । तेषां विहगानाञ्चक्र

आपुरेव मिथुनानि वियोगं
लङ्घ्यते न खलु कालनियोगः ॥१३॥
यच्छति प्रतिमुखन्दयितायै
वाचमन्तिकगतेऽपि शकुन्तौ ।
नीयते स्म नतमुज्झितहर्षं
पङ्कजं मुखमिवाम्बुरुहिण्या ॥१४॥

वाकाणामित्यर्थः मिथुनानि वियोगमापुरेव नतु नापुरि-त्ययोगव्यवच्छेदः । तथाहि कालनियोगो दैवाज्ञा न लङ्घ्यते खलु दुर्वार इत्यर्थः ॥ १३ ॥

यच्छतीति । शकुन्तौ चक्रवाकपक्षिणि सामान्यस्य प्राकरणिक विशेषपर्य्यवसानात् । शकुन्तिपक्षिशकुनि-शकुन्तशकुनद्विजा इत्यमरः । अन्तिकगते समीपस्थेऽपि दयितायै चक्रवाक्यै प्रतिमुखमभिमुखं यथा तथा वाचं यच्छति वाचमेव ददाने सति नतु सङ्गच्छमाने सती-त्यर्थः । पाघ्राध्मेत्यादिना दाणोयच्छादेशः । अम्बुरु-हिण्या नलिन्या उज्झितहर्षं चक्रवाकदुःखदर्शनादिव त्यक्तविकासम्पङ्कजं मुखमिव नतिन्नम्रत्वं नीयते स्म नीतम् । प्रधानकर्म्मण्याख्येये लादीनाङ्द्विकर्म्मणामिति नयते-र्द्विकर्म्मकत्वात्प्रधाने कर्म्मणि लट् । प्रायेण दुःखदर्श-नात् स्त्रियः खिद्यन्ते विशेषेण विरहदर्शनादिति भावः । अत्र पङ्कजावनतेश्चक्रवाकविक्रोशानन्तर्य्याद्धेतुत्वमुत्-प्रेक्ष्यते । तत्र मुखोपमेयम् अम्बुरुहिण्याकामिनीसाम्य-

रञ्जिता नु विविधास्तरुशैला
नामितं नु गगनं स्थगितं नु।
पूरिता नु विषमेषु धरित्री
संहृता नु ककुभस्तिमिरेण ॥ १५॥

रात्रिरागमलिनानि विकाशं
पङ्कजानि रहयन्ति विहाय।

स्पष्टतारकमियाय नभः श्रीर्व्वस्तुमिच्छति हि वस्तुनि तस्मै।

अथान्यानि वाच्यते इत्युपमोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः। व्यञ्जकाद्यप्रयोगात्प्रतीयमानोत्प्रेक्षा ॥ १४ ॥

रञ्जिताइति। तिमिरेणान्धकारेण विविधास्तरवः शैलाश्चरञ्जिताः स्ववर्णमापादिताः नु। अन्यथा कथमेषां नीलत्वमिति भावः। तथा गगनं नामितं नु आभूतलादिति शेषः। मितं कस्वइत्यत्र वाशब्दानुवृत्त्या व्यवस्थितविभाषाश्रयणान्नस्वः। यद्वा गगनं स्थगितम् आच्छादितं नु। उभयत्रापि तमसावृतत्वान्न दृश्यतइति भावः। तथा धरित्री विषमेषु निम्नोन्नतेषु पूरिता समीकृता नु। अन्यथा तद्विवेकः कथं न स्यादिति भावः। ककुभोदिशश्च संहृताः नु लुप्ताः किम्। दिशस्तु ककुभः काष्ठाआशाश्च हरितश्च ताइत्यमरः। कथमन्यथा न दृश्यन्तइति भावः। अत्र तिमिरे तरुशैलाद्यनेकविषयरञ्जकत्वादिकमारोप्य सन्दिग्धइति सन्देहालङ्कारः। अन्ये तु नुशब्दस्य सम्भावनाद्योतकत्वमतोत्प्रेक्षामकारमित्यलङ्कारसर्व्वस्वकारः ॥ १५ ॥

स्पष्टतारकमियाय नभः श्री
र्वस्तुमिच्छति निरापदि सर्वः ॥ १६ ॥
व्यानशे शशधरेण विमुक्तः
केतकीकुसुमकेसरपाण्डुः ।
चूर्णमुष्टिरिव लम्भितकान्ति
र्वासवस्य दिशमंशुसमूहः ॥१७॥

रात्रीति । श्रीः शोभा कर्त्री रात्रेः सन्ध्यारागेण स्वच्छायोपरञ्जनेन मलिनानि अतएव विकार्य्यं रहयन्ति त्यजन्ति । रहयतेस्त्यागार्थाच्छतृप्रत्ययः । पङ्कजानि विहाय त्यक्त्वा स्पष्टतारकं नभः खमियाय प्राप तथाहि । सर्व्वोजनोनिरापदि निर्बाधस्थले वस्तुं स्थातुम् । एकाच-उपदेशेऽनुदात्तादितीट्प्रतिषेधः । घसिश्च सान्तेषु वसिः प्रसारिणीति वचनात् । इच्छति ॥ १६ ॥

अस्तादिसन्ध्यान्तं वर्णयित्वा चन्द्रोदयवर्णनमारभते । व्यानशइति । शशधरेण चन्द्रेण विमुक्तः क्षिप्तः केतकी-कुसुमकेसरइवपाण्डुः लम्भिता प्रापिता कान्तिर्यस्य स रश्मिसमूहश्चूर्णस्य कर्पूरक्षोदस्य मुष्टिरिव । मुष्टिशब्दस्य-द्विलिङ्गत्वेप्यत्रपुंल्लिङ्गतैव ग्राह्या । उपमेयानुसारात् । वासवस्येन्द्रस्य दिशम्प्राचीं व्यानशे व्याप । अनेन दिशा-निशाकरयोर्नायिकानायकौपम्यव्यज्यते ॥ १७ ॥

उज्झतीति । इन्द्रस्येयमैन्द्री दिक् प्राची तारकराजे नक्षत्रनाथे । कनीनिकायां नक्षत्रे तारकान्तारकापि

उज्झती शुचमिवाशु तमिस्रा-
मन्तिकं व्रजति तारकराजे ।
दिक्प्रसादगुणमण्डनमूहे
रश्मिहासविशदं मुखमैन्द्री ॥१८॥

नीलनीरजनिभे हिमगौरं
शैलरुद्धवपुषः सितरश्मेः ।
खे रराज निपतत्करजालं
वारिधेः पयसि गाङ्गमिवाम्भः ॥१९॥

चेति विग्रहः । अन्तिकं समीपं व्रजति सति आशु तमिस्रामन्धतमसम् । तमिस्रा स्त्री ध्वान्तनिशि निश्यन्धतमसेन नेति वैजयन्ती । शुचमिव विरहदुःखमिवेत्यर्थः । उज्झती विजहती प्रसादो नैर्मल्यमेव गुणः स एव मण्डनं यस्य तत् रश्मयो हास इव तेन विशदं मुखमिव मुखमग्रभागम् । श्लिष्टोपमेयम् । ऊहे वहति स्म । अत्र दिक्चन्द्रयोर्नायिकानायकौपम्यङ्गम्यते ॥ १८ ॥

नीलेति । शैलरुद्धवपुषः उदयगिरितिरोहितमण्डलस्य सितरश्मेरिन्दोः सम्बन्धि नीलनीरजनिभे श्यामकमलतुल्ये खे आकाशे निपतत् प्रसरत् । हिमवद्गौरं शुभ्रं करजालं वारिधे पयसि निपतत् गाङ्गमम्भ इव रराज उपमानेऽपि विशेषणं योज्यम् ॥ १९ ॥

द्यामिति । द्यामन्तरिक्षमाकाशमाहृतवत् प्रति-

द्यामिरुन्धदतिनीलघनाभं
ध्वान्तमुद्यतकरेण पुरस्तात् ।
क्षिप्यमाणमसितेतरभासा
शम्भुनेव करिचर्म्म चकासे ॥२०॥
अन्तिकान्तिगतेन्दुविसृष्टे
जिह्मतां जहति दीधितिजाले ।
निःसृतस्तिमिरभारनिरोधा
दुच्छ्वसन्निव रराज दिगन्तः ॥२१॥

नीलघनाभं मेचकम् उद्यताः कराश्चंशवो हस्ताश्च यस्य तेन । असिताभ्यइतराः शुभ्राभासोयस्य तेन चन्द्रेण पुरोस्तात्प्राच्याम् अग्रे च क्षिप्यमाणं नुद्यमानं ध्वान्तं शम्भुना क्षिप्यमाणं करिचर्मैव चकासे । उपमानेऽपि विशेषणानि योज्यानि ॥ २० ॥

अन्तिकेति । अन्तिकान्तिकेऽतिसमीपे । प्रकारे गुणवचनस्येति द्विर्भावः कर्म्मधारयवद्भावात्सुपोलुक् । अन्तिकान्तिकगतेनेन्दुना विसृष्टे मुक्ते दीधितिजाले किरणसमूहे जिह्मतां सङ्कोचञ्जहति त्यजति सति तिमिरभारैस्तमःस्तोमैर्निरोधादुपरोधान्निःसृतोनिर्गतः दिगन्तः उच्छ्वसन् प्राणन्निव रराजेत्युत्प्रेक्षालङ्कारः ॥ २१ ॥

लेखयेति । इन्दुर्विमलविद्रुमभासा स्वच्छप्रवालसवर्णया कलया लेखया सन्ततं सान्द्रतिमिरम् आदिवराहः

लेखया विमलविद्रुमभासा
सन्ततन्तिमिरमिन्दुरुदासे।
दंष्ट्रया कनकटङ्कपिशङ्ग्या
मण्डलम्भुव इवादिवराहः ॥२२॥

दीपयन्नथ नभः किरणौघैः
कुङ्कुमारुणपयोधरगौरः।
हेमकुम्भइव पूर्वपयोधे
रुन्ममज्ज शनकैस्तुहिनांशुः ॥२३॥

उद्गतेन्दुमविभिन्नतमिस्रा
म्पश्यति स्म रजनीमवितृप्तः।

कनकस्य टङ्कः शिलाभेदकं शस्त्रम्। टङ्कः पाषाणदारेण इत्यमरः। तद्वत्पिशङ्ग्यालोहितवर्णया। पिशङ्गादुपसङ्ख्यानमिति ङीप्। दंष्ट्रया भुवोमण्डलमिव उदासे उच्चिक्षिपे। अस्यतः कर्त्तरि लिट्। सोपसर्गादस्यतेरात्मनेपदं विकल्पात्॥ २२॥

दीपयन्निति। अथोदयानन्तरङ्किरणौघैर्नभोदीपयन् प्रकाशयन् कुङ्कुमेनारुणोयः पयोधरः कुचः तद्वत् गौरोऽरुणः उदयरागादिति भावः तुहिनांशुरिन्दुः शनकैः पूर्वपयोधेः पूर्वसागरात् हेम्नः कुम्भइवोन्ममज्जोज्जगामेत्युत्प्रेक्षा॥ २३॥

उद्गतेन्दुमिति। लोकोजनः। लोकस्तु भुवने जन-

व्यंशुकस्फुटमुखीमतिजिह्मां
व्रीडया नववधूमिव लोकः ॥ २४ ॥
न प्रसादमुचितङ्गमिता द्यौ
र्नोद्धृतन्तिमिरमद्रिवनेभ्यः ।
दिङ्मुखेषु न च धाम विकीर्णं
भूषितैव रजनी हिमभासा ॥ २५ ॥
मानिनीजनविलोचनपाता
नुष्णबाष्पकलुषान्प्रतिगृह्णन् ।

इत्यमरः । उद्गतेन्दुमुदितचन्द्राम् अविभिन्नतमिस्रामनिःशेषितध्वान्तां रजनीम् अंशुकमपनीतावगुण्ठनमयएव स्फुटं दृश्यमानं मुखं यस्याः सा तान्तथापि व्रीडयातिजिह्मां वक्रां नववधून्नवोढाम् । वधून्नवोढयोर्भार्यां स्नुषाभार्य्याङ्गनासु चेति धरणिः सुस्त्रियमिवाविष्टः सन् पश्यति स्म ॥ २४ ॥

नेति । हिमभासा चन्द्रेण द्यौराकाशमुचितं योग्यम्प्रसादन्नगमिता अद्रयोवनानि च तेभ्यस्तिमिरं नोद्धृतं नोत्सारितन्दिशां मुखेषु धाम तेजश्च न विकीर्णं न पर्य्यस्तन्तथापि रजनी भूषितैव किमुतोक्तगुणसम्पत्ताविति भावः । अत्र प्रसाधनकारणाभावेऽपि तत्कार्य्यभूषणोक्त्या विभावनालङ्कारः ॥ २५ ॥

मानिनीति । उदितः शीतमयूखः उष्णेन विरह-

मन्दमन्दमुदितः प्रययौ खं
भीतभीतइव शीतमयूखः ॥२६॥
श्लिष्यतः प्रियवधूरुपकण्ठं
तारकास्ततकरस्य हिमांशोः।
उद्वमन्नभिरराज समन्ता
दङ्गरागइव लोहितरागः ॥२७॥

तस्मिन् वार्थे वा कलुषाणाविलान्मानिनीजनस्य कलहान्त-रितनायिकाजनस्य विलोचनपातान्मानभङ्गजनितरोषेण। भीषयानिति भावः। कोपात्कान्तमपराणुद्य पश्चात्ताप समन्विता। कलहान्तरिता प्रोक्तानायिका नयशालि-भिरिति दशरूपके। प्रतिच्छन्न् स्वीकुर्व्वन् अपराध-स्यापरिहार्य्यत्वादिति भावः। अतएव भीतभीतोभीत-प्रकारइवेत्युत्प्रेक्षा। मन्दमन्दं मन्दप्रकारम्। उभय-त्रापि प्रकारे गुणवचनस्येति द्विर्भावे कर्म्मधारयवद्भावात्-सुलोपः। खमाकाशम्प्रययौ ॥ २६ ॥

श्लिष्यतइति। ततः प्रसारिताः कराएव कराअंशु-हस्तायेन तस्य ततकरस्य तारकाएव प्रियवधूः उप-कण्ठम् अन्तिके कण्ठे वा। अत्यन्तसंयोगे द्वितीया विभक्त्यर्थेऽव्ययीभावः। श्लिष्यतः प्रत्यासीदतः आलिङ्ग-तश्च हिमांशोः सम्बन्धी समन्तात् उद्वमन्नुत्सर्पन्। अर्थान्तरत्वादकर्म्मकत्वम्। धातोरर्थान्तरे वृत्तेरिति वचनात्। लोहितरागोऽरुणप्रभा अङ्गरागइवाभिरराज

प्रेरितः शशधरेण करौघः
संहतान्यपि नुनोद तमांसि ।
क्षीरसिन्धुरिव मन्दरभिन्नः
काननान्यविरलोच्चतरूणि ॥२८॥

शारताङ्गमितया शशिपादै
श्छायया विटपिनाम्प्रतिपेदे ।
न्यस्तशुक्लबलिचित्रतलाभि
स्तुल्यता वसतिवेश्ममहीभिः ॥२९॥

आलिङ्गनाद्रागोगलतीति प्रसिद्धिः । अत्र रूपकोपमयो-रङ्गाङ्गिभावेन सङ्करः ॥ २७ ॥

प्रेरितइति । शशधरेण चन्द्रेण प्रेरितोविसृष्टः करौघः संहतानि सान्द्राण्यपि तमांसि मन्दरेण मन्द-राचलेन भिन्नानुन्नः क्षीरसिन्धुः अविरलाः सान्द्राः उच्चाउन्नताश्च तरवोयेषु तानि काननानीव नुनोद चिक्षेप दूरीचकार ॥ २८ ॥

शारतामिति । शशिपादैश्चन्द्ररश्मिभिः । पादा-रश्म्यङ्घ्रितुर्य्यांशाइत्यमरः । शारतां शवलताङ्गमितया । शारः शवलपीतयोरिति विश्वः । विटपिनान्तरूणां छायया न्यस्तैर्निःक्षिप्तैः शुक्लबलिभिः श्वेतपुष्पाद्युपहारैश्चित्राणि तलानि उपरिभागायासान्ताभिः । करोप हारयोः पुंसि बलि प्राण्यङ्गजे स्त्रियामित्यमरः । वसति

आतपे धृतिमता सह वध्वा
यामिनीविरहिणा विहगेन।
सेहिरे न किरणा हिमरश्मे-
र्दुःखिते मनसि सर्वमसह्यम् ॥३०॥
गन्धमुद्धतरजःकणवाही
विक्षिपन्विकसतां कुमुदानाम्।

वेश्मभूमीभिर्निवासस्थहभूमितुल्यता साम्यं प्रतिपेदे। कर्म्मणि लिट्। आर्थीयमुपमा ॥ २९ ॥

आतपइति। आतपे दुःखकरेऽपीति भावः वध्वाः चक्रवाक्या सह अतएव धृतिमता सन्तोषवता यामिनीषु विरहिणा नियतविरहेण अतएव विहङ्गेन चक्रवाकेण हिमरश्मेश्चन्द्रस्य किरणा नसेहिरे। तथाहि। दुःखिते सञ्जातदुःखे मनसि सर्व्वं मनोहरमपीति भावः असह्यं सोढुमशक्यम्। शकिसहोश्चेति यत्प्रत्ययः। पूर्व्वत्रातपादिति पेठुस्तत्र वध्वा सहातपाअपि सेहिरे तद्विरहिणा तु शशिकिरणाअपि न सेहिरइति योज्यम्। फलन्तु समानम् ॥ ३० ॥

गन्धमिति। अपाङ्कणवाही। योग्यान्वये व्यवधानमपि सोढव्यम्। विकसतां कुमुदानाङ्गन्धं सौरभम् उद्धतं रजः परागोयस्मिन् कर्म्मणि तद्यथा तथा। शेषाद्विभाषेति विकल्पान्न कप्। विक्षिपन् विकिरन् इत्थं शिशिरः सुरभिर्यामिनीमरुद्रात्रिवायुः परितो-

आदुधाव परिलीनविहङ्गा
यामिनीमरुदपां वनराजीः ॥३१॥
संविधातुमभिषेकमुदासे
मन्मथस्य लसदंशुजलौघः ।
यामिनीवनितया ततचिह्नः
सोत्पलोरजतकुम्भ इवेन्दुः ॥३२॥
ओजसापि खलु नूनमनूनं
नासहायमुपयाति जयश्रीः ।

लीनाः शयिताः विहङ्गा यासु ता वनराजीराडुधाव ईषत्कम्पयामास विहङ्गशयनाविरोधेनेत्यर्थः । आङीषदर्थेऽभिव्याप्तावित्यमरः । यथा कश्चित्कामिनीं गन्धोदकादिना सिञ्चन्नाकर्षति तद्वदिति भावः ॥ ३१ ॥

संविधातुमिति । यामिनी वनितेव तया रात्रिरूपया कान्तया मन्मथस्याभिषेकन्त्रिभुवनजैत्रयात्राभिषेकं संविधातुं सम्यक्कर्तुम् अंशवो जलानीव तेषामोघः पूरः लसन् यस्मिन्सः ततचिह्नः स्फुटलाञ्छनइन्दुः सोत्पलोरजतकुम्भइव उदासे उत्क्षिप्तः । अस्यतेः कर्मणि लिट् । अत्र संविधातुमिति तुमुना प्रतीयमानोत्प्रेक्षयानुप्राणितोऽयम् उपमोत्प्रेक्षयोः सङ्करः ॥ ३२ ॥

ओजसेति । ओजसा अनूनं सम्पूर्णमपि असहायं सहायरहितं पुरुषमिति शेषः जयश्रीर्नोपयाति खलु नूनं

यद्विभुः शशिमयूखसखः स
न्नाददे विजयि चापमनङ्गः ॥३३॥
सद्मनां विरचनाऽऽहितशोभै
रागतप्रियकथैरपि दूत्यम् ।
सन्निकृष्टरतिभिः सुरदारै
र्भूषितैरपि विभूषणमीषे ॥३४॥
न स्रजो रुरुचिरे रमणीभ्य
श्चन्दनानि विरहे मदिरा वा ।

कुतोयद्यस्माद्विभुः समर्थोऽप्यनङ्गः शशिमयूखानां सखा सहचरस्तथोक्तः ससहायः सन्नित्यर्थः। विजयि विजयशीलम्। जिदृक्षीत्यादिना इन्प्रत्ययः। चापमाददे। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥३३॥

इत्युद्दीपनसामग्रीमुपवर्ण्य सम्प्रति तत्कार्य्यभूतं रतिवर्णनमारभते। सद्मनामित्यादि। सन्निकृष्टरतिभिरासन्नसुरतोत्सवैरतएव सुरदारैः सुरवधूभिराहितशोभैः प्रागेव विहितकेलिगृहमण्डनैरपि पुनः सद्मनां केलिगृहाणां विरचना मण्डनमीषेऽभिलेषे। इषे कर्म्मणि लिट्। आगतप्रियकथः प्राप्तप्रियजनवृत्तान्तैरपि दूतस्य कर्म्म दूत्यं दूतिव्यापारईषे। वा दूतवणिग्भ्यां चेतियप्रत्ययः। तथा भूषितैरपि विभूषणं प्रसाधनमीषे। औत्सुक्यातिरेकादिति भावः ॥ ३४ ॥

साधनेषु हि रतेरुपधत्ते
रम्यतां प्रियसमागम एव ॥ ३५ ॥
प्रस्थिताभिरधिनाथनिवासं
ध्वंसितप्रियसखीवचनाभिः ।
मानिनीभिरपहस्तितधैर्य्यः
सादयन्नपि मदोऽवललम्बे ॥ ३६ ॥

नेति । विरहे वियोगावस्थायां स्रजो माल्यानि चन्दनानि गन्धाः मदिरा मद्यानि वा रमणीभ्यः । रुच्यर्थानाम्प्रीयमाणइति सम्प्रदानत्वाच्चतुर्थी । न रुरुचिरे न रोचन्ते स्म । हि यस्मात् प्रियसमागम एव रतेः साधनेषु स्रगादिषु रम्यतां मनोहरत्वं रुचिकरत्वमिति यावत् उपधत्ते आधत्ते । तदभावादरुचिर्युक्तैवेत्यर्थः । अत एव वैधर्म्यात्कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः । रम्यन्ते एष्विति रम्याणि । पोरदुपधादिति यत्प्रत्ययः हलश्चेति बहुलग्रहणादधिकरणार्थः ॥ ३५ ॥

प्रस्थिताभिरिति । अधिनाथनिवासम्प्रियगृहं प्रतिप्रस्थिताभिः प्रचलिताभिर्ध्वंसितानि खण्डितानि प्रियसखीवचनानि स्वयं प्रस्थानं लाघवायेत्येवंरूपाणि याभिस्ताभिर्मानीभिः कोपनाभिः । स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये इति लक्षणात् । अपहस्तितन्निरस्तं धैर्य्यं येन सः । तथा सादयन् मानं शरीरञ्च कर्षयन्नपि सदोषोपीत्यर्थः मदोऽवलम्बे स्वीकृतः

कान्तवेश्म बहु सन्दिशतीभि
र्यातमेव रतये रमणीभिः ।
मन्मथेन परिलुप्तमतीना
म्प्रायशः स्खलितमप्युपकारि ॥३७॥

आशु कान्तमभिसारितवत्या
योषितः पुलकरुद्धकपोलम् ।
निर्जिगाय मुखमिन्दुमखण्डं
खण्डपत्रतिलकाकृति कान्त्या ॥३८॥

अज्ञानव्याजेनलाघवमङ्गवमीकर्यादिति भावः ॥ ३६ ॥

कान्तेति । रतये सुरताय बहु सन्दिशतीभिरनेकं वाचिकङ्कुर्वयन्तीभिः सन्देशव्यसनात्कन्तव्यमप्यजानतीभिरित्यर्थः । रमणीभिः कान्तवेश्म यातमाप्तमेव नतु मार्गे मध्ये निवृत्तमित्यर्थः । तथाहि मन्मथेन परिलुप्तमतीनां भ्रष्टमतीनां स्खलितं विरुद्धाचरणमपि प्रायशउपकारि भवति ॥ ३७ ॥

आश्विति । आशु कान्तमभिसारितवत्याः अभिगतवत्याः । स्वार्थे णिच् । योषितः सम्बन्धि पुलकैरुद्धावावृतौ कपोलौ यस्य तत् खण्डा अस्पष्टा पत्राणां पत्रलेखानां तिलकस्य चाकृतिः सन्निवेशोयस्य तत्तथोक्तं मुखकान्त्या अखण्डं पूर्णमिन्दुन्निर्जिगायजयति स्म इत्यार्थीयमुपमा । जयति हेतीति दण्डिना सादृश्यार्थेषु गणनात् ॥ ३८ ॥

उच्यतां स वचनीयमशेषं
नेश्वरे परुषता सखि साध्वी ।
आनयैनमनुनीय कथं वा
विप्रियाणि जनयन्ननुनेयः ॥३९॥
किङ्गतेन न हि युक्तमुपैतुं
कः प्रिये सुभगमानिनि मानः ।

अथ युग्मेन सखीनायिकासंवादमाह । उच्यतामिति । तत्र नायिकाह । स धूर्त्तः अशेषमखिलं वचनीयं वक्तव्यमुच्यतां निःशङ्कमुपालभ्यतामित्यर्थः । ब्रूञो दुहादित्वादप्रधाने कर्म्मणि लोट् । अथ सख्याह । हे सखि ईश्वरे भर्त्तरि नायके विषयेपरुषता पारुष्यं न साध्वी न हिता । अथ नायिकाह । हे सखि तर्हि एनमनुनीय सान्त्वयित्वा आनय । पुनः सखी आह । विप्रियाणि जनयन् अप्रियाणि कुर्व्वन् स कथं वाऽनुनेयः अनुनयार्हः ॥ ३९ ॥

किमिति । पुनर्नायिकाह । तर्हि गतेन तत्प्रति गमनेन किं कोऽर्थइत्यर्थः । कुतः उपैतुङ्गन्तुन्न युक्तं हि । पुनः सख्याह । हे सुभगमानिनि सौन्दर्य्यमानिनि । सुभगमात्मानं मन्यते इति आत्ममाने खश्चेति चकाराण्णिनिप्रत्ययः । तस्मिन्प्रिये विषये कोमानः मानोन कर्त्तव्यइत्यर्थः । यद्वा नहीत्यादि सखीवाक्यम् । तत्र नहीत्येकं वाक्यन्तद्युक्तं नहीत्यर्थः । हे सखि किन्तु उपैतुं युक्तं कुतः सुभगमानिनि प्रिये कोमानस्तादृग्जनस्य दुर्लभत्वा-

योषितामिति कथासु समेतैः
कामिभिर्बहुरसा धृतिरूहे ॥४०॥ युग्मम् ।
योषितः पुलकरोधि दधत्या
घर्म्मवारि नवसङ्गमजन्म ।
कान्तवक्षसि बभूव पतन्त्या
मण्डनं लुलितमण्डनतैव ॥४१॥
शीधुपानविधुरासु निगृह्ल
न्मानमाशु शिथिलीकृतलज्जः ।

इति भावः । इत्येवंरूपासु योषिताङ्कथासु विषये समेतैः समीपमागत्याकर्णयद्भिरित्यर्थः । कामिभिर्बहुरसाऽनेकस्वादार्ष्टतिः सन्तोषः ऊहे ऊढ़ा । अत रौच्योत्सुक्यनिर्वेदाद्यनेकभावशावल्यपरिपूर्णकान्ताकथाकर्णनादुत्तरोत्तरमपूर्वहृदयानन्दनिष्यन्दमानन्दसन्दोहमविन्दन्नित्यर्थः । प्रायेणात प्रौढ़ाः कलहान्तरिताश्च नायिकाः ॥ ४० ॥

योषित इति । पुलकरोधि रोमाञ्चव्यापि नवसङ्गमेन जनयस्य तत् घर्म्मवारि स्वेदोदकन्दधत्या इति सात्विकोक्तिः । कान्तवक्षसि पतन्त्या इत्यौत्सुक्योक्तिः । योषितोया लुलितमण्डनता उत्कृष्टप्रसाधनत्वम् । भावे तल् । सैव मण्डनमभूत । तादृशफलत्वाक्तस्येति भावः ॥ ४१ ॥

शीध्विति । शीतेऽनेनेति शीधु पक्वेक्षुरसविकारो मद्यविशेषस्तस्य पानेन विधुरासु विमूढासु तथा दयितः

संगतासु दयितैरुपलेभे
कामिनीषु मदनोनु मदोनु ॥४२॥
द्वारि चक्षुरधिपाणि कपोलौ
जीवितन्त्वयि कुतः कलहोऽस्याः ।
कामिनामिति वचः पुनरुक्तं
प्रीतये नवनवत्वमियाय ॥४३॥

सङ्गतासु स्वयमागतासु च कामिनीषु अतिमानवतीसु आशु मानकोपं निरस्यन्निवर्त्तयन् शिथिलकृता लज्जा येन सः मदनोनु मदोनु उपलेभे लभ्यते स्मेत्यर्थः । प्रियसमागमशीधुपानरूपोभयकारणाभङ्गादुभयथा मानविग्रहाद्यनुभावसाधारण्याच्च सन्देहः सएवालङ्कारः ॥ ४२ ॥

द्वारीति । द्वारि त्वदागमनमार्गे एव चक्षुरित्यौत्सुक्योक्तिः । अधिपाणि पाणौ करे कपोलाविति चिन्तोक्तिः । किमङ्गना जीवितन्त्वयि तदधीनं त्वां विना न जीवतीत्यर्थः । इति गाढानुरागोक्तिः । अतोऽस्याः कलहोविग्रहः कुतइत्येवं कामिनीप्रीतये पुनरुक्तम्पुनःपुनरुच्यमानं वचोदूतीवाक्यन्नवनवत्वन्नवप्रकारत्वमपूर्ववत्त्वमियाय । प्रकारार्थे द्विर्भावः कर्म्मधारयवद्भावात्सुपोलुक् । कान्तानुरागप्रकटनात्कामिनः प्रहृष्यन्तीति भावः । कलहान्तरितेयम् ॥ ४३ ॥

साचीति । लोचनयुगं साचि तिर्य्यक् नमयन्ती प्रियेतर्य्यक् पातयन्ती नतु छिद्येत्यर्थः दयितवक्षसि पातं

साचि लोचनयुगन्नमयन्ती
रुन्धती दयितवक्षसि पातम्।
सुभ्रुवोजनयति स्म विभूषां
सङ्गतावुपरराम च लज्जा ॥४४॥
सव्यलीकमवधीरितखिन्न
म्प्रस्थितं सपदि कोपपदेन।
योषितः सुहृदिव स्म रुणद्धि
प्राणनाथमभिवाष्पनिपातः ॥४५॥

रुन्धती दृष्टमपि प्रतिवध्नती लज्जा सुभ्रुवोनायिकाया-विभूषां शोभाञ्जनयति स्म। सङ्गतौ सुरतप्रसङ्गे सत्यु-परराम च। एवं यतस्तदा न दूषणमेवेति भावः। विभा-षाकर्म्मकादिति परस्मैपदम् ॥ ४४ ॥

सव्यलीकमिति। सव्यलीकं सापराधमतएवावधी-रितिः अवज्ञातः सन् खिन्नस्तम्। पूर्वकालेत्यादिना तत्पुरुषः। सपदिकोपस्य पदेन व्याजेन प्रस्थितन्निर्ग-च्छन्तं प्राणनाथं प्रिययोषितः सम्बन्धि अभिवाष्पनिपातः आभिमुख्येनाश्रुमोचः सुहृदिव रुणद्धि स्म रुरोध। वाष्पपातस्य मन्युमोचलिङ्गतया प्रस्थानप्रतिवन्धकत्वात् सुहृदोपम्यम्। इयमधीरा खण्डिता। ज्ञातेऽन्यास-ङ्गिनि पताखण्डितेर्ष्याकषायिता। अधीराश्रु विमुञ्चन्ती विज्ञेया चात नायिकेति दशरूपके॥ ४५ ॥

शङ्किताय कृतवाष्पनिपाता
मीर्ष्यया विमुखितान्दयिताय।
मानिनोमभिमुखाहितचित्तां
शंसति स्म घनरोमविभेदः॥ ४६॥
लोलदृष्टि वदनन्दयितायाः
श्चुम्बति प्रियतमे रभसेन।

शङ्कितायेति। शङ्किताय नायकाय अविश्वस्ताय दयिताय ईर्ष्यया विमुखितां विमुखीकृताम् अतएव कृतवाष्पनिपातां मानिनीं घनरोमविभेदः सान्द्रपुलकोदयः अभिमुखमाहितञ्चित्तं यया तां निष्कोपामित्यर्थः शंसति स्म व्यनक्ति स्मेत्यर्थः। अन्यथा सात्विकानुदयादिति भावः। अत्रापि पूर्वोक्तैव नायिका॥ ४६॥

अथ सम्भोगश्रृङ्गारमाह। स आन्तरोवाह्यश्च तत्र वाह्यरतमाह। लोलेति। प्रियतमे लोलदृष्टि चञ्चलेक्षणन्दयितायावदनं रभसेन बलात्कारेण चुम्बति सति विनीवि निर्गतबन्धनमंशुकं नितम्बात् व्रीड़या सह शिथिलतामुपपेदे उभयमपि शिथिलमासीदित्यर्थः अत्र व्रीड़ांशुकरूपसम्बन्धिभेदभिन्नवृत्तिस्रंसनरूपशैथिल्ययाभेदाध्यवसायनिबन्धनातिशयोक्तिमूलसहोक्तिविशेषोऽलङ्कारः। अतएव व्रीड़ांशुकौपम्यञ्च कल्प्यम्। अत्र वात्स्यायनः वाह्यमाभ्यन्तरञ्चेति द्विविधं रतमुच्यते। तत्राद्यञ्चुम्बनाश्लेषनखदन्तक्षतादिकम्। द्वितीयं

व्रीडया सह विनीवि नितम्बा
दंशुकं शिथिलतामुपपेदे ॥४७॥
ह्रीतया गलितनीवि निरस्य
न्नन्तरीयमवलम्बितकाञ्चि ।
मण्डलीकृतपृथुस्तनभारं
सस्वजे दयितया हृदयेशः ॥४८॥
आहृता नखपदैः परिरम्भा
श्चुम्बितानि घनदन्तनिपातैः ।

सुरतं साक्षान्नानाकारेण कल्पितमिति ॥ ४७ ॥

ह्रीतयेति । गलितनीवि गलितबन्धनं तथाप्यवलम्बिताकाञ्ची येन तत् काञ्चीलग्नमित्यर्थः तदन्तरीयमधोंऽशुकम् । अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके इत्यमरः । निरस्यन्नाक्षिपन् हृदयेशः प्रियः ह्रीतया वस्त्रापगमात्लज्जितया । ह्रीधातोः कर्त्तरि क्तः । दयितया मण्डलीकृतः वर्तुलीकृतः पृथुस्तनभारो यस्मिन् कर्म्मणि तद्यथा तथा गाढमित्यर्थः । सस्वजे आश्लिष्टः प्रियदृष्टेः प्रतिबन्धार्थमित्यर्थः ॥ ४८ ॥

आहृता इति । परिरम्भा आलिङ्गनानि नखपदैर्हेतुभिराहृताः अभिमताः । हेताविति तृतीया । तथा चुम्बनानि घनदन्तनिपातैर्गाढ़दन्तक्षतैर्हेतुभिराहृतानीति लिङ्गविपरिणामः । सुरतसुखोद्दीपकत्वान्नखदन्तक्षतपूर्वकेषु

सौकुमार्य्यगुणसम्भृतकीर्त्ति
र्वाम एव सुरतेष्वपि कामः ॥४९॥

पाणिपल्लवविधूननमन्तः
सीत्कृतानि नयनार्द्धनिमेषाः।
योषितां रहसि गद्गदवाचा
मस्त्रतामुपययुर्मदनस्य ॥५०॥

आलिङ्गनचुम्बनेष्वादरः संवृत्त इत्यर्थः। ननु सुकुमारे कामतन्त्रे कथम्पीडाकरेष्वादर इति न वाच्यमित्याह। सौकुमार्य्येति। सौकुमार्य्यमेव गुणस्तेन सम्भृतकीर्त्तिः लब्धयशाः कामः सुरतेषु सम्भोगेष्वपि न केवलं विप्रलम्भेष्विति भावः। वामः क्रूर एव सुकुमारः काम इति वादमात्रम्। वस्तुतस्तु पीड़यन्नेव सुखमावहतीति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४९ ॥

अथाभ्यन्तरं रतमाह। पाणीति। रहस्येकान्ते इति विस्रम्भातिशयोक्तिः गद्गदवाचां स्खलद्गिरां योषितां सम्बन्धीनि पाणिपल्लवयोर्व्विधूननकम्पनमन्तः सीत्कृतानि सीत्काराः। एतेन कुट्टमिताख्यो भाव उक्तः। अधरपीडनादौ सुखेऽपि दुःखवदुपचारः कुट्टमितमिति लक्षणात्। नयनानामर्द्धनिमेषा अर्द्धनिमीलितानि। रहस्येकान्ते गद्गदवाचां योषितामिति विशेषणसामर्थ्यात् गद्गदवाक्च इत्येतानि मदनस्यास्त्रतामुपययुरस्त्रवत् पुंसामुद्दीपनान्यासन्नित्यर्थः। अत्र सीत्कारार्द्धनिमेषादिना सुखपार-

पातुमाहितरतीन्यभिलेषु
स्तर्षयन्त्यपुनरुक्तरसानि।
सस्मितानि वदनानि वधूनां
सोत्पलानि च मधूनि युवानः॥५१॥

कान्तसङ्गमपराजितमन्यौ
वारुणीरसनशान्तविवादे।

वश्यं व्यज्यते। तदुक्तं रतिरहस्ये। स्रस्तता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाभलक्षणम्। श्लेषयेत्स्वजघनं मुहुर्मुहुः सीत्करोति गतलज्जिताकुलेति॥५०॥

अथ मधुपानवर्णनमारभते। पातुमित्यादिना। युवान आहितरतीति वर्द्धितरागाणि अतएवापुनरुक्तरसानि पुनः पुनः पानेनाप्यपूर्वस्वादानि अतएव तर्षयन्ति तृष्णोत्पादकानि अतृप्तिकराणीत्यर्थः सस्मितानि वधूनां वदनानि सोत्पलानि मधूनि च पातुमभिलेषुरिच्छन्ति स्म। अत्र प्रस्तुतानामेव वदनानां मधूनाञ्च पानक्रियौपम्यस्य गम्यत्वात्केवलं प्राकरणिकविषयतया तुल्ययोगितालङ्कारः। प्रस्तुतानान्तथान्येषां केवलन्तुल्यधर्म्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति लक्षणात्।५१

कान्तेति। कान्तसङ्गमेन पराजितमन्यौ त्यक्तरोषे तदवधिकत्वात्तस्येति भावः। किञ्च वारुणीरसनेन मद्यास्वादेन शान्तोविवादोवाक्कलहादिर्यस्य तस्मिन् अतः उपाहितसन्धौ प्रियैः सह कृतसन्धाने मानिनीजने विषये

मानिनीजनउपाहितसन्धौ
सन्दधे धनुषि नेषुमनङ्गः ॥५२॥
कुप्यताशु भवतानतचित्ताः
कोपितांश्च वरिवस्यत यूनः।
इत्यनेकउपदेशइव स्म
स्वाद्यते युवतिभिर्मधुवारः ॥५३॥
भर्तृभिः प्रणयसंभ्रमदत्तां
वारुणीमतिरसां रसयित्वा।

अनङ्गोधनुषि इषुन्न सन्दधे सिद्धसाध्ये साधनवैयर्थ्यादिति भावः॥ ५२॥

कुप्यतेति। यूनः प्रियान् कुप्यत यूनां कोपञ्जनयत। नात्र क्रुधद्रुहेत्यादिना यूनां सम्प्रदानत्वे चतुर्थी तस्य यम्प्रति कोपइति नियमादत्र कोपस्तावत्न्नचिमइति। आशु आनतचित्ता अनुकूलचित्ता भवत। किञ्च कोपितान् वरिवस्यत परिचरत। नमोवरिवश्चित्रङः क्यजिति क्यच्। वरिवसः परिचर्य्यायामित्यर्थे तस्य नियमश्च। इत्येवमनेकोऽनेकप्रकारोयउपदेशः प्रवर्त्तकवाक्यं सइव मधुवारोमधुपानावृत्तिः। मधुवारामधुक्रमाइत्यमरः। युवतिभिः स्वाद्यते स्म। मधुवारस्य कोपादिकार्य्यप्रवर्त्तकत्वसाम्यादुपदेशइवेत्युत्प्रेक्षा। अनियताः खलु मत्तचेष्टाइति भावः॥ ५३॥

ह्रीविमोहविरहादुपलेभे
पाटवं नु हृदयन्नु वधूभिः ॥५४॥
स्वादितः स्वयमथैधितमानं
लम्भितः प्रियतमैः सह पीतः।

भर्तृभिरिति। भर्तृभिः प्रणयसंभ्रमाभ्यां प्रेमादराभ्यां दत्ताम्। संभ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपीति विश्वः। अतएवाति रसामधिकस्वादां वारुणीं वरुणात्मजाम्। सुरा हलिप्रिया हालापरिस्रुद्वरुणात्मजेत्यमरः। रसयित्वा आस्वाद्य वधूभिः ह्रीविमोहविरहात् मदेन लज्जा जाड्यापगमाद्धेतोः पाटवं नु हृदयं नु ज्ञानविशेषन्नु उपलेभे। अतएव हृदयस्य तत्कार्य्यज्ञानसामर्थ्यात् हृदयमेव प्रागसत्त्वाल्लब्धमिति सन्देहः। अन्यथा कथं प्रियं प्रति वक्रोक्त्याद्यर्थेषु प्रवृत्तिरिति भावः। सन्देहालङ्कारः ॥५४॥

स्वादितइति। स्वयं स्वादितआदौ स्वयमेव पीतोऽथानन्तरम्प्रियतमैरेधितमानं वर्द्धितबहुमानं यथा तथा लम्भितोग्राहितः स्वहस्तेन प्रापितइत्यर्थः। ततः प्रियतमैः सह पीतः युगपदेकपात्रेण पीतइत्यर्थः। आसवः प्रमदानाम्प्रतिपदम्प्रतिचषकं नैकरूपरसतामनेकविधस्वादुत्वम्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः नञ् समासे नलोपः स्यात्। भेजे इव प्रापेव। प्रायेणोपचारविशेषाद्धि भोज्येषु रसविशेषः स्यादिति भावः। आस्वादनादिपदा-

आसवः प्रतिपदप्रमदानां
नैकरूपरसतामिव भेजे ॥५५॥
भ्रूविलाससुभगाननुकर्त्तुं
विभ्रमानिव वधूनयनानाम् ।
आददे मृदुविलोलपलाशै-
रुत्पलैश्चषकवीचिषु कम्पः ॥५६॥
ओष्ठपल्लवविदंशरुचीनां
हृद्यतामुपययौ रमणानाम् ।

यीनामनेकरसताप्राप्तिहेतुत्वात् काव्यलिङ्गन्तावदेकं स्वाद-नादीनामनेकधर्म्माणामेकस्मिन्नेव सर्व्वक्रमेण सम्बन्धात् पर्य्यायभेदश्च तयोश्च संसृष्टयोरनेकरसत्वोत्प्रेक्षावीजत्वात्तया सहाङ्गाङ्गिभावेन सङ्करः ॥ ५५ ॥

भ्रूविलासेति । भ्रूविलासैः सुभगान् सुन्दरान् वधू-नयनानां विभ्रमाननुकर्त्तुं तैरात्मानं समीकर्त्तुमिवेति फलोत्प्रेक्षा । मृदुविलोलपलाशैरीषच्चञ्चलदलैरुत्पलै-श्चषकेषु यावीचयोमधर्म्मिथस्तासु यः कम्पः स आददे स्वीकृतः न तु स्वकम्पस्तस्य विलोलविशेषणेनैवोक्तत्वात्तत्-स्वीकारस्य तद्योगएव । पूर्व्वं नेत्रमात्रसाम्यभाजामुत्प-लानां कम्पमानवीचियोगात्सभ्रूविलासनेत्रसाम्यं जात-मित्यर्थः ॥ ५६ ॥

ओष्ठेति । ओष्ठएव पल्लवस्तस्य विदंशे दंशने रुचिरभि-

फुल्ललोचनविनीलसरोजै
रङ्गनास्यचषकैर्मधुवारः ॥५७॥
प्राप्यते गुणवतापि गुणानां
व्यक्तमाश्रयवशेन विशेषः ।
तत्तथा हि दयिताननदत्तं
व्यानशे मधु रसातिशयेन ॥५८॥
वीक्ष्य रत्नचषकेष्वतिरिक्तां
कान्तदन्तपदमण्डनलक्ष्मीम् ।

लाषो येषान्तेषां मुखसुरापानमिषेणाधरमपि पासतामि-
त्यर्थः । रमणानां फुल्लानि लोचनान्येव विनीलसरोजानि
येषु तैः अङ्गनास्यान्येव चषकाणि पानपात्राणि । चषको-
ऽस्त्री पानपात्रमित्यमरः । तैर्मधुवारो मधुपानावृत्तिर्हृद्यतां
हृदयप्रियतामुपययौ । हृदयस्य प्रेमइति यत्प्रत्ययः ।
हृदयस्य हृल्लेखयदणलासेष्विति हृद्भावः । रमणविशेष-
णार्थहेतुककाव्यलिङ्गसङ्कीर्णरूपकालङ्कारः ॥ ५७ ॥

प्राप्यतइति । गुणवताप्याश्रयवशेन गुणानां विशेषः
प्रकर्षः प्राप्यते व्यक्तं तत्तथा यदुक्तन्तथैवेत्यर्थः । हि
यस्माद्दयितायाआननेन करणेन दत्तं मधु रसातिशयेन
स्वादुप्रकर्षेण कर्त्रा व्यानशे व्याप्तम् । विशेषेण सामान्य-
समर्थन रूपोऽर्थान्तरन्यासः ॥ ५८ ॥

वीक्ष्येति । रत्नचषकेषु स्फटिकादिमणिपात्रेषु प्रति-

जज्ञिरे बहुमताः प्रमदाना
मोष्ठयावकनुदोमधुवाराः ॥५८॥
लोचनाधरकृताहृतरागा
वासिताननविशेषितगन्धा।

रिक्तां यावकापगमात् पूर्वाभ्यधिकां कान्तस्य यद्दन्तपद-मण्डनन्तस्य लक्ष्मीं शोभाम् प्रतिबिम्बितामिति शेषः वीक्ष्य ओष्ठयावकनुदोऽधरलाक्षारागहारिणोमधुवारा-मधुपानाभ्यासाः प्रमदानां बहुमताअभिमताः। वर्त्तमाने क्तः तद्योगात् षष्ठी। जज्ञिरे जाताः तेषां प्रियानुराग-चिह्नप्रकाशकत्वादिति भावः॥५८॥

मधुपानाद्विलोचनेषु रागोत्पत्तिरधरेभ्यस्च लाक्षारा-गनिवृत्तिर्मुखाननयोश्चान्योन्यगन्धसङ्क्रान्तिरिति स्थिते सत्युत्प्रेक्ष्यते। लोचनेति। लोचने चाधरश्च लोचना-धरम्। समुद्राभ्रइति व्यभिचारज्ञापकात् नात्राधरशब्दस्य पूर्वनिपातः। कृतश्चासावाहृतश्चेति विशेषणसमासः। लोचनाधरस्य कृताहृतोरागोयया सा तयोक्ता लोचनयोः कृतरागा अधरादासमन्तात् हृतरागा चेत्यर्थः। षष्ठ्या-स्रार्थसम्बन्धात् सामान्यस्य योग्यविशेषणपर्य्यवसान-नियमेनाधिकरणापादानार्थयोराक्षेपात्। तथा चाधर-लोचनपरगुणयोः रागतद्विरहयोः स्थानविपरीतवृत्तिं कृतवतीत्यर्थः। तथा वासितेन स्वगन्धसङ्क्रान्तिसुरभि-तेनाननेन विशेषितोऽतिशयितोगन्धोयस्याः सा। यद्वा

वारुणी परगुणात्मगुणानां
व्यत्ययं विनिमयं नु वितेने ॥ ६० ॥

वासितानना चासौ अर्थादाननेनैव विशेषितगन्धा चेति कृतबहुब्रीहिविशेषणसमासः। उभयथापि आननसङ्क्रान्तस्वगन्धा स्वसङ्क्रान्ताननगन्धा चेत्यर्थः। एवं भूता वारुणीमदिरा परगुणात्मगुणानाम्परयोर्लोचनाधरयोः गुणौ च परस्याननस्य गुणा आत्मनोवारुण्याः गुणाश्च परगुणात्मगुणास्तेषाम्परगुणानामात्मगुणानां व्यत्ययं नुविनिमयं नु वितेने विस्तारयामास। चित्तेन प्रामादिकी वस्तुपरिवृत्तिर्व्यत्ययः। बुद्धिपूर्वा तु वस्तुपरिवृत्तिर्विनिमयः। अत्र तन्त्रोच्चरितस्य परगुणशब्दस्यावृत्त्या परगुणौ च परगुणात्मगुणौ चेति विग्रहः कथञ्चिदगत्या सोढव्यः उपमानपूर्वपदबहुब्रीहिवत्। तथा चायमर्थः परगुणयोरधरलोचनगुणयोरागतद्विरहयोर्व्यत्ययन्नु विनिमयन्नु वितेने तथा परगुणात्मगुणयोः आननगन्धात्मगन्धयोश्च व्यत्ययं नु विनिमयं नु वितेने। अन्यथा कथमन्यस्मिन्नन्यधर्मोपलम्भः सम्भवतीति भावः। अत्र लोचनाधररागयोस्तद्भावयोर्वा भेदेऽप्यभेदाध्यवसायादेकत्ववाचोयुक्तिः तस्मात्तन्मूलातिशयोक्त्यनुप्राणिता चेयं व्यत्ययविनिमययोरन्यतरकरणोत्प्रेक्षेति सङ्क्षेपः सा च प्रतीयमाना व्यञ्जकाप्रयोगात्। नु शब्दस्तु संशये ॥ ६० ॥

तुल्येति। अक्ष्णोस्तुल्यरूपमक्षितुल्याकृति योषितः

तुल्यरूपमसितोत्पलमक्ष्णोः
कर्णगं निरुपकारि विदित्वा ।
योषितः सुहृदिव प्रविभेजे
लम्भितेक्षणरुचिर्मदरागः ॥६१॥
क्षीणयावकरसोऽप्यतिपानैः
कान्तदन्तपदलम्भितशोभः ।
आययावतितरामिव वध्वाः
सान्द्रतामधरपल्लवरागः ॥६२॥

कर्णगं कर्णावतंसीकृतमसितोत्पलं निरुपकारि अनुपकारकं विदित्वा ज्ञात्वा तत्कार्यशोभायाः कर्णान्तविश्रान्तेनाक्ष्णैव कृतत्वादिति भावः । मदरागः सुहृदिव उत्पलस्य बन्धुरिवानिष्टवारकत्वादिति भावः । लम्भितेक्षणरुचिः प्रापितनयनकान्तिः सन् प्रविभेजे वर्णान्तरापादनेन प्रविभक्तवान् । अतैलक्षणकरादक्ष्णः व्यावर्त्तयामास ततो विच्छित्तिकरत्वादिति भावः ॥ ६१ ॥

क्षीणेति । अतिपानैः क्षीणयावकरसः क्षीणलाक्षारागोऽपि कान्तस्य दयितस्य दन्तपदेन दन्तक्षतेन लम्भिता शोभा यस्य सः वध्वा अधरपल्लवरागोऽतितरामतिमात्रम् । अतिशब्दात्तरप्प्रत्यये किमेत्तिङव्ययेत्यादिना आमुप्रत्ययः तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञा । सान्द्रतां घनत्वमाययाविव प्रियोपभोगचिह्नमण्डितानां कामिन्यवय-

रागकान्तनयनेषु नितान्तं
विद्रुमारुणकपोलतलेषु।
सर्व्वगापि ददृशे वनितानां
न्दर्पणेष्विव मुखेषु मदश्रीः ॥६३॥
बद्धकोपविकृतीरपि रामा
श्चारुताभिमततामुपनिन्ये।

वानां किमन्यैर्भूषणैरिति भावः। तत्र क्षीणस्यापि सान्द्रतेति विरोधात् कान्तदन्तेत्यादिविशेषणगत्या सान्द्रत्वे हेतूक्त्या काव्यलिङ्गन्तत्सङ्कीर्णा चोत्प्रेक्षा ॥ ६२ ॥

रागेति। वनितानां सर्व्वगापि सर्व्वाङ्गगतापि। अन्तात्यन्तेत्यादिना डः। मदश्रीरागेण कान्तानि नयनानि येषु तेषु विद्रुमवदरुणानि कपोलतलानि येषु तेषु मुखेषु दर्पणेष्विव नितान्तन्ददृशे तेषां नयनादिनैर्मल्येन रागाभिव्यक्तिसम्भवादिति भावः। अत्र मदश्रीः सर्व्वगतापि मुखेष्वेव ददृशे इति विरोधः तस्य मुखविशेषणैः समाधानात् काव्यलिङ्गानुप्राणितोविरोधवदाभासोऽलङ्कारः। सचोपमया संसृज्यते ॥ ६३ ॥

बद्धेति। बद्धा कोपेन विकृतिर्याभिस्तास्तथाभूता अपि रामाः कर्त्री चारुता तासां सौन्दर्य्यङ्कर्त्री अभिमततां प्रियवाल्लभ्यमुपनिन्ये। सौन्दर्य्ये हि विकृतिमपि रोचयतइति भावः। मधुमदोदयितानां वश्यतां विधेयत्वमुपनिन्ये। तथाहि। सर्व्वश्चात्मवर्गहितमिच्छति अत-

वश्यतां मधुमदो दयितानां
मात्मवर्गहितमिच्छति सर्व्वः ॥६४॥
वाससां शिथिलतामुपनाभि
ह्रीनिरासमपदे कुपितानि ।
योषितां विदधती गुणपक्षे
निर्म्ममार्ज्ज मदिरा वचनीयम् ॥६५॥
भर्तृषूपसखि निक्षिपतीना
मात्मनोमधुमदोद्यमितानाम् ।

चारुता स्त्रीत्वात् स्त्रीणामुपचकार मधुमदस्तु पुंस्त्वात् पुंसाम् इति युक्तमित्यर्थः । अत्र विकृताश्चाप्यभिमताः कुपिताश्चपि वश्याइति विरोधस्य चारुतामदाभ्यां समाधानादुभययापि विरोधाभासोभवन्नर्थान्तरन्यासेन संसृज्यते ॥ ६४॥

वाससामिति । उपनाभि नाभिसमीपे वाससां शिथिलतां ह्रीनिरासं लज्जात्यागमपदे कुपितानि अस्थानकोपांश्च गुणपक्षे गुणकोटौ विदधती निवेशयन्ती दोषानप्येतान् गुणान् कुर्व्वतीत्यर्थः । मदिरापि योषितां वचनीयम् । न नाभिन्दर्शयेदिति शास्त्रनिषिद्धाचरणनिन्दां निर्म्ममार्ज्ज । तथा दोषाणामपि वस्त्रशैथिल्यादीनान्तदानीं गुणत्वान्न कश्चिद्वचनीयावकाश इत्यर्थः ॥ ६५ ॥

भर्तृष्विति । उपसखि सखीसमीपे । समीपार्थेऽव्ययीभावः । आत्मनः स्वदेहान् । आत्मा जीवे धृतौ

व्रीडया विफलया वनितानां
न स्थितं न विगतं हृदयेषु ॥६६॥
रुन्धती नयनवाक्यविकाशं
सादितोभयकरा परिरम्भे ।
व्रीडितस्य ललितं युवतीनां
क्षीवता बहुगुणैरनुजह्रे ॥६७॥

हे स्वभावे परमात्मनीति वैजयन्ती । भर्तृषु निक्षिप-
तीनां निपातयन्तीनामस्मद्गणामुपरि पतन्तीनामित्यर्थः ।
प्राक्क्षीनद्योर्तुमिति विकल्पान्नुमभावः । कुतः मधुमदेनो-
द्यमितानां प्रेरितानां नतु स्वेच्छयेति भावः । वनिता-
नामनुरक्तस्त्रीणाम् । वनिता जनितात्यर्थानुरागयोषि-
तीति विश्वः । हृदयेषु विफलया अनुचिताचरणादिति
भावः । व्रीड़या न स्थितं न विगतं वैफल्यात्तस्यामदोपा-
धिकत्वाच्चेति भावः । अतएव नोभयनिषेधविरोधः ॥६६॥

रुन्धतीति । नयनानां वाक्यानाञ्च विकाशम्प्राग-
ल्भ्यं रुन्धतीप्रतिबध्नती । तथा परिरम्भे आलिङ्गने
सादितौ सन्नितावुभौ करौ यया सा युवतीनां सञ्ज-
न्धिनी क्षीवता मत्तता । अनुपसर्गात् फुल्लक्षीवकृशोल्ला-
घादृति निपातनात्साधुः । क्षीवा मत्ता तस्याभावः क्षी-
वता । त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्यः । बहुगुणैर्दृष्टि-
सङ्कोचादिभिर्व्रीड़ितस्य व्रीड़ायाः । भावे क्तः । ललितं
विलासं अनुजह्रे अनुचक्रे । कर्त्तरि लिट् । व्रीड़ाकार्य्य-

योषिदुद्धतमनोभवरागा
मानवत्यपि ययौ दयिताङ्कम्।
कारयत्यनिभृता गुणदोषे
वारुणी खलु रहस्यविभेदम्॥६८॥
आहिते नु मधुना मधुरत्वे
चेष्टितस्य गमिते नु विकाशम्।

करत्वाद्व्रीडानुकरणमित्युपमालङ्कारः॥६७॥

योषिदिति। उद्धतउत्कटोमनोभवेन योरागः स यस्याः सा योषिन्मानवत्यपि दयितस्याङ्कं ययौ यतोमानाद्रागोवलीयानिति भावः। लाघवदोषम्परिहरति। कारयतीति। अनिभृता चपला न कार्य्यकारिणीत्यर्थः। वारुणी मदिरा गुणेषु दोषेषु च विषये। सर्व्वोऽपि द्वन्द्वोविभाषयैकवद्भवति। रहस्यविभेदं रहस्यभङ्गङ्कारयति खलु। बलान्निगूहितावपि गुणदोषौ प्रकाशयतीत्यर्थः। यतोनिगूढरागप्रकटनस्प्रकटमानत्यागस्य प्रमत्तायान लाघवमावहति अबुद्धिपूर्वकत्वादिति भावः॥६८॥

आहितइति। मधुना मद्येन चेष्टितस्य व्यापारस्य मधुरत्वे माधुर्य्ये आहिते नु प्रागसत्वेव मनोहरत्वे सम्प्रत्युत्पादिते वा। विकाशङ्गमिते नु प्राक्सत्वेव माधुर्य्ये प्रकर्षम्प्रापिते वा उद्धतरागः उद्रिक्तरागः। अतएव कुसुमेषोः कामिनीष्ववसरः प्रवेशोनवद्ववाबभौ नित्यसन्निहितोपि मदनः कामिनीषु मदकृततात्कालिकचेष्टामाधु-

आवभौ नवइवोद्धतरागः
कामिनीष्ववसरः कुसुमेषोः ॥६९॥

मा गमन्मदविमूढधियोनः
प्रोज्झ्य रन्तुमिति शङ्कितनाथाः ।
योषितोन मदिराम्भ्रशमीषुः
प्रेम पश्यति भयान्यपदेपि ॥७०॥

चित्तनिर्वृतिविधायि विविक्तं
मन्मथोमधुमदः शशिभासः ।

र्थाद्रागोद्रेके सत्यऽपूर्ववदुद्दीप्तोऽभूदित्यर्थः । संशयानुप्रा-
णितेयमत्प्रेक्षा ॥ ६९ ॥

मा गमन्निति । शङ्कितनाथाअविश्वस्तपुरुषाः योषि-
तोमदेन विमूढधियः सन्बुद्धयोनोऽस्मान्प्रोज्झ्य वि-
सृज्य । प्रपूर्वादुज्झतेः समासेऽनञ्पूर्वे क्त्वोल्यप् । रन्तु
मा गमन्नगच्छन्त्विति मनीषयेति शेषः । गमेर्माङि
लुङ् न माङ्योगइत्यडागमप्रतिषेधः । मदिराम्भ्रशमति-
मात नेषुर्नैच्छन्ति स्म किन्तु भर्तृ वियोगभयादीष-
देवपपुरित्यर्थः । तथाहि । प्रेम स्नेहः अपदेऽस्थानेऽपि
भयान्यनिष्टानि पश्यत्युत्प्रेक्षते शङ्कतइति यावत् । शङ्का-
हेतौ प्रेमणि कर्तृत्वोपचारः ॥ ७० ॥

चित्तेति । चित्तस्य निर्वृत्तिविधायि सुखकरं विविक्तं
रहः । विविक्तं रहसि स्यातमिति विश्वः । मन्मथः

सङ्गमस्य दयितैः स्म नयन्ति
प्रेम कामपि भुवम्प्रमदानाम् ॥७१॥
धार्ष्ट्यलङ्घितयथोचितभूमौ
निर्द्दयं विलुलितालकमाल्ये ।
मानिनीरतिविधौ कुसुमेषु
र्मत्तमत्त इव विभ्रममाप ॥७२॥

मधुमदोमद्यमदः शशिभासश्चन्द्रिकाः दयितैः सह सङ्गमस्य । वृद्धोयूनेति निर्द्देशात्सहशब्दाप्रयोगेऽपि सहार्थे तृतीया । एतानि प्रमदानाम्प्रेम वियोगा सहत्वावस्थासम्भोगं काम्पिभुवं काञ्चिद्दशां नयन्ति स्म रत्यवस्थामप्यतिक्रम्य शृङ्गारवस्थां क्रीड़ामयीं निन्युरित्यर्थः । प्रेमाभिलाषोरागश्च स्नेहः प्रेम रतिस्तथा । शृङ्गारश्चेति सम्भोगः सप्तावस्थः प्रकीर्त्तितइत्युक्तं रसरत्नाकरे । प्रेमादिदृक्षा रम्येषु तच्चिन्ताप्यभिलाषकः । रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणाक्रिया । तद्वियोगासहम्प्रेम रतिस्तत्सहवर्त्तनम् । शृङ्गारस्तत्समंक्रीड़ा सम्भोगः सप्तधाक्रमइति ॥७१॥

क्रीड़ावस्थामाह । धार्ष्ट्येति । धार्ष्ट्येन प्रागल्भ्येन लङ्घिता यथोचिता योग्या भूमिर्म्मर्य्यादा यस्मिन् तथोक्तं । चुम्बनताड़नमणितसीत्कारपुरुषायितादौ स्वयमुच्छृङ्खलवृत्तिरिति भावः । निर्द्दयं यथा तथा विलुलितानि आकर्षणाकुलितान्यलकमाल्यानि यस्मिंस्तस्मिन्मानिनी-

शीधुपानविधुरेषु वधूनां
निघ्नतामुपगतेषु वपुःषु।
ईहितं रतिरसाहितभावं
वीतलक्ष्यमपि कामिषु रेजे ॥७३॥

अन्योन्यरक्तमनसामथ विभ्रतीना
ञ्चेतोभुवो हरिसखाप्सरसां निदेशम्।

रतिविधौ स्वोऽस्मरते कुसुमेषुः कामः मत्तमत्तोप्रका-रइव विभ्रमं विजृम्भणमाप प्राप। मत्तः किन्न करोतीति भावः। कारयितरि कर्तृत्वोपचारादुत्प्रेक्षा ॥ ७२ ॥

शीध्विति। शीधुपानेन मद्यपानेन विधुरेषु विह्वलेषु। मैरेयमासवः शीधुरित्यमरः। अतएव वपुःषु अङ्गेषु निघ्नतामप्रियपराधीनतामुपगतेषु सत्सु। अधीनानिघ्नआयत्त इत्यमरः। वधूनां सम्बन्धि रतिरसे सुरतरसास्वादे आहितभावन्दत्तचित्तं कामिषु विषये ईहितञ्चुम्बनताड़नादिचेष्टितं वीतलक्ष्यन्निर्विषयमस्थानकृतमपीत्यर्थः। रेजे रागिणां स्खलितमपि शोभतइति भावः। विरोधालङ्कारः ॥ ७३ ॥

अन्योन्येति। अथ हरिसखाद्इन्द्रसचिवागन्धर्वीस्तेषामप्सरसां च। अन्योन्यरक्तमनसाम्परस्परानुरक्तचित्तानाञ्चेतोभुवः कामस्य निदेशमाज्ञां विभ्रतीनां स्मरविधेयानान्तासु रममाणास्वेवेत्यर्थः। षष्ठी चानादरे इति षष्ठी। विबोधनं शीलमेषान्ते वैबोधिकावैतालिकाः।

वैबोधिकध्वनिविभावितपश्चिमार्द्धा
सा संहृतेव परिवृत्तिमियाय रात्रिः ॥७४
निद्राविनोदितनितान्तरतिक्लमाना
मायामिमङ्गलनिनादविबोधितानाम् ।
रामासु भाविविरहाकुलितासु यूना
न्तत्पूर्वतामिव समादधिरे रतानि ॥७५॥

शीलमिति ठक्। तेषां ध्वनिभिर्मङ्गलरवैर्विभावितोऽभ्यू-
हितोज्ञातः पश्चिमार्द्धश्चरमभागोयस्याः सा तथोक्ता सा
रात्रिः संहृता सङ्क्षिप्तेवेत्युत्प्रेक्षा । सुखिनाम्भूयानपि
कालोलघीयानिव भवतीति भावः । परिवृत्तिं निवृत्ति-
मियाय प्रभातकल्पाभूदित्यर्थः ॥ ७४ ॥

निद्रेति । निद्रया विनोदितोऽपनीतोनितान्तम् अत्यर्थं
योरत्याः क्लमः स येषान्तेषाम् आयामिभिरायामवद्भिर्दी-
र्घैर्मङ्गलनिनादैः वैबोधिकध्वनिभिर्विबोधितानाम् । यूनां
रामासु । सुन्दरी रमणी रामेत्यमरः । भाविविरहेणा-
कुलितासु सतीषु रतानि तान्येव पूर्वाणि प्रथमानि तत्-
पूर्वाणि तेषां भावस्तत्पूर्वताम् । भावे तल्प्रत्ययः । समा-
दधिरे प्रापुरित्युत्प्रेक्षा आद्यसुरतवदादरात्प्रवर्त्तन्त-
इत्यर्थः । यदुत्तरकालं दुर्लभन्तदतितृष्णयानुभूयतइ-
त्यर्थः ॥ ७५ ॥

कान्तेति । सुरतखेदेन निमीलितान्यक्षीणि येन तं

कान्ताजनं सुरतखेदनिमीलिताक्षं
संवाहितुं समुपयानिव मन्दमन्दम् ।
हर्म्येषु माल्यमदिरापरिभोगगन्धा
नाविश्चकार रजनीपरिवृत्तिवायुः ॥७६॥
आमोदवासितचलाधरपल्लवेषु
निद्राकषायितविपाटललोचनेषु ।

कान्ताजनं संवाहितुं सेवितुमिव खेदापनोदार्थमङ्गमर्द्दनङ्कर्तुमिवेत्यर्थः । संवाहनं वाहनेऽपि नरादेरङ्गमर्द्दनइति विश्वः । वाहप्रयत्नइति धातोरण्यन्तात्तुमुन् । अन्यथा णिच् ग्रहणे संवाहयितुमिति स्यात् । मन्दमन्दम्मन्दप्रकारम् । प्रकारे गुणवचनस्येति द्विर्भावे कर्म्मधारयवद्भावात्सुपोलुक् । समुपयान्संवान् रजनीपरिवृत्तिवायुर्निशावसानमरुत् । हर्म्येषु माल्यानि च मदिरा च परिभोगोविमर्दश्च तेषाङ्गन्धानाविश्चकार वहिःप्रसर्पयामासेत्यर्थः । अत्र संवाहितुमिवेत्युत्प्रेक्षा । सान्यगुणमूलत्वाद्गुणनिमित्तक्रियाफलोत्प्रेक्षा ॥ ७६ ॥

आमोदेति । आमोदेन मद्यगन्धेन वासिताः सुरभिताश्चलादष्टमुक्तत्वात् स्फुरन्तश्चाधरपल्लवायेषु तेषु निद्रया कषायितान्यपटूकृतानि विपाटलानि लोचनानि येषु तेषु । कषायस्तुवरे न स्त्री निर्य्यासे रञ्जकादिके । सुरभावपटौ रक्ते सुन्दरे लवणेऽपि चेति केशवः । व्यामृष्टानि प्रमृष्टानि पत्राणि तिलकाश्च येषान्तेषु विलासि-

व्याम्हष्टपत्रतिलकेषु विलासिनीनां
शोभाम्बबन्ध वदनेषु मदावशेषः ॥७७॥
गतवति नखलेखालक्ष्यतामङ्गरागे
समददयितपीताताम्रबिम्बाधराणाम्।
विरहविधुरमिष्टा सत्सखीवाङ्गनानां
हृदयमवललम्बे रात्रिसम्भोगलक्ष्मीः ॥७८॥

नीनां वदनेषु मदावशेषः शोभाम्बबन्ध। मण्डनान्तरापाये मदशेषएव मण्डनं बभूवेत्यर्थः। स्त्रीणां मदएव विभूषणमिति भावः ॥ ७७ ॥

गतवतीति। अङ्गरागेऽङ्गविलेपने नखरेखासु नखपदेषु लक्ष्यतां दृश्यताङ्गतवति सति विमर्दात्तन्मात्रावशेषे सतीत्यर्थः। किञ्च बिम्बतुल्याअधराः बिम्बाधराः। शाकपार्थिवादित्वात् मध्यमपदलोपी समानाधिकरणसमासइति वामनः। समदैर्दयितैः पीताः पीड़िताः अतएवातिपीड़नादाताम्राआसमन्ताद्रक्ताबिम्बाधरायासान्तासामङ्गनानां सम्बन्धि विरहेणाह्निकेन वियोगेन विधुरं विह्वलं हृदयं रात्रिसम्भोगलक्ष्मीः नखपदादिशोभेत्यर्थः। इष्टा आप्ता सत्सखीव निपुणसहचरीवावललम्बे धारयामास। प्रियसम्भोगचिह्नशोभा स्पष्टा बभूवेत्यर्थः। प्रियोपभोगचिह्नशोभावलोकनलालसाः कथं विरहं सहन्तइत्यर्थः। श्रुतिपूर्णोपमालङ्कारः। मालिनीवृत्तम्। लक्षणमुक्तम् ॥ ७८ ॥

इति श्रीमहोपाध्यायभारविकृतौ किराता-र्ज्जुनीये महाकाव्ये सुरसुन्दरीसम्भोगवर्णनं नाम नवमः सर्गः ॥९॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविर-चितायां किरातार्ज्जुनीयव्याख्यायां घण्टापथसमाख्यायां नवमः सर्गः ॥ ९ ॥

समाप्तमिदम्पूर्ब्बार्द्धम्।



कलिकाता निमतला घाट ष्ट्रीट ८ संख्यक भवने श्रीयुतभुवनचन्द्रवसाकसंस्थापितसंवादज्ञानरत्नाकर यन्त्रे तद्द्वारैव मुद्रित। इं० १८७७।